"कर्तव्यमेतद् विपरीतमेतत्"

इत्यात्मकं भेदमहं न जाने ।

अधर्मनाशं कुरु धर्मरक्षां

कृष्णे! ................॥ 5

# देशीयगीतानि

## தேசீயகீதங்கள்

### I

"செந்தமிழ் நாடென்னும் போதினிலே"

सद्द्राविडो देश इति प्रसक्ते

मधुप्रवाहो विशतीव कर्णम् ।

पितामहाधिष्ठितदेश एष

इतीरिते शक्तिरुदेति जीवे ॥ 1

वेदस्य सर्वस्य निदानदेशः

प्रशस्तवीर्यस्य निवासदेशः ।

रम्भासमाभिः प्रियकन्यकाभिः

समावृतो द्राविडदेश एषः ॥ 2

कावेरिनद्या किल ताम्रपर्ण्या

पिनाकिनीक्षीरनदीमुखाभिः ।

अलङ्कृतस्तेन परां समृद्धिं

धत्ते सदा द्राविडदेश एषः ॥ 3

अगस्त्यनामा द्रविडोक्तिरक्षी
रक्ष यं सुष्टु महाचलस्थः ।
भाग्यानि सर्वाण्यपि यत्र सन्ति
विराजते द्राविडदेश एषः ॥

नीलाब्धितीरे कुमरीतिनाम्नः
तपस्यतो भूमितलस्य नित्यम् ।
दिश्युत्तरस्यां वृषभाचलस्य
ख्यातोऽस्ति मध्ये द्रविडाख्यदेशः ॥

अनन्तविद्या विलसन्ति यत्र
कविश्च कम्बो भुवि यत्र जज्ञे ।
लोके यतो वाति च शास्त्रगन्धः
प्रकाशते द्राविडदेश एषः ॥

सृष्ट्वा कविं 'वल्लुव' नामधेयं
लोकाय दत्वा प्रथितप्रभावः ।
'शिलप्पधीकार' समाख्यरत्न-
हारावृतो द्राविडदेश एषः ॥

द्वीपानिमान् सिंहल-जावकादीन्
गत्वा ध्वजाः मीनयुताः स्वकीयाः ।
आरोपिता यैर्वरवीरमुख्यैः
विभात्यसौ द्राविडदेश एषाम् ॥

व्योमस्पृशं हेमगिरिं च भेत्तुं
ये वा समर्था भुवि पार्थिवेन्द्राः ।
कलिङ्गदेशः समरे जितो यैः
चकास्ति तैर्द्राविडदेश एषः ॥ 9

वाणिज्यसैन्ये विविधाः कलाश्च
संवर्ध्य चीने यवने च मिश्रम् ।
अन्येषु देशेष्वपि विश्रुताना-
मावासभूर्द्राविडदेश एषः ॥ 10

## महात्मगान्धिपञ्चकम्

### II

"வாழ்க நீ! எம்மான்"

आक्रान्तमन्यै रहितं समृद्ध्या
तं भारतं शोच्यदशामवाप्तम् ।
उद्धर्तुकामो यदभूस्त्वमत्र
गान्धे! महात्मन् जय नाथवर्य! ॥ 1

विधाय मुक्तिं भुवि पारतन्त्र्यात्
विद्याधनौन्नत्ययुतान् मनुष्यान् ।
कर्तुं वरिष्ठानकरोः प्रयत्नं
कीर्त्या त्वमाद्यो जगतो विभासि ॥ 2

## अस्मद्देशः

(மன்னும் இமயமலை எங்கள் மலையே)

हिमाद्रितुल्यो भुवि नास्ति शैलः
गङ्गासमा श्रेष्ठनदी क्व चास्ति ।
ग्रन्थो न लोके किल वेदतुल्यः
न भारतात् श्रेष्ठतमोऽस्ति देशः ॥

महारथैः योगिवरैरुपेतः
सन्मार्गगो नारदगानयुक्तः ।
ज्ञानाश्रयो बुद्धकृपैकपात्रं
लोकेऽद्वितीयो भुवि भारतोऽयम् ॥

दारिद्र्यमुक्ताः भयवर्जिताश्च
दुष्कर्महीनाः दृढदेशभक्ताः ।
धान्यैः मधुक्षीरफलैः समृद्धं
स्तुमो वयं भारतदेशमेनम् ॥

## वन्दे मातरम्

"வந்தே மாதரம் என்போம்"

न गण्यते जातिमतप्रभेदः
स्वान् जन्मना श्रेष्ठतमान् वदन्तः ।
विप्रास्तदन्ये च समानभूताः
ब्रूमः प्रणामोऽस्त्विति देशमात्रे ॥

सन्त्वन्त्यजाः, तेऽपि सहैव देशे
जीवन्ति, बाह्याः किमु चीनवत् ते ।
न तेऽन्यदेश्या इवनो द्विषन्ति
ब्रूमः . . . . . . . . . . . ॥ 2

भवन्तु वर्णाः, न हि पारतन्त्र्यं
देशस्य युक्तं, कलहे कृतेऽपि ।
सहोदरा एव वयं जगत्यां
ब्रूमः . . . . . . . . . . . . . ॥ 3

ऐक्ये भवेत् जीवनमन्यथात्वे
नाशः समेषामिदमत्र बोध्यम् ।
इदं यदि ज्ञातमतो न चिन्ता
ब्रूमः. . . . . . . . . . . . ॥ 4

सम्प्राप्तमौन्नत्यमिदं समेषां
भाव्यं समं त्रिंशति कोटिषु स्यात् ।
अस्माकमृद्धिर्यदिवा मृतिः स्यात्
ब्रूमः . . . . . . . . . . ॥ 5

दिनानि दास्यैः क्षपितानि मत्वा
व्रीडाजुषो दुःखविनाशहेतोः ।
निर्धूय शोकप्रदपारतन्त्र्यं
ब्रूमो . . . . . . . . . . ॥ 6

## "जयतु तिलकस्य नाम"

வாழ்க திலகன் நாமம்

स्वातन्त्र्यनादो भवतात् दिशासु
प्रयातु दास्यं नरकोपमं तत् ।
नराः स्युरज्ञानतमोनिवृत्ताः
जीयादभीत्यै तिलकस्य नाम ॥

चक्रे स्थिरं ज्ञानमयं गृहं यः
भावाढ्यदुर्गं निचखान तत्र ।
वैशद्यदेवालयमत्र तेने
स्वातन्त्र्यकेतुं तिलको बबन्ध ॥

दुःखाब्धिसन्तारणपोतरूपं
शोकस्य भूतस्य विनाशतन्त्रम् ।
पुष्पं सदा प्रेममधूपसिक्तं
तन्नाम, पुंस्त्वं विवृणोति लोके ॥

## नीतिसमूहः

பாப்பாப்பாட்டு

"ஓடி விளையாடு பாப்பா"

त्वं वत्स नित्यं विहरस्व धावन्
निलीय मा तिष्ठ कदापि वत्स ।
सर्वैं मिलित्वा क्रियतां विहारः
कुत्रापि बाले न हि पश्य दोषम् ॥

हे वत्स! सर्वत्र चरन् यथेच्छं
एह्यत्र चिल्लो डयते यथा तु।
विचित्रवर्णान् विहगान् समीक्ष्य
प्रहृष्टचित्तो भव बाल नित्यम् ॥ 2

भुक्त्वा चरन्तं भुवि कुक्कुटं च
कृत्वा समीपे विहरस्व बाल!।
उत्प्लुत्य चौर्योद्यतवायसं च
कारुण्यभावेन विभावय त्वम् ॥ 3

धेनुं पयोवर्षमुचं जनानां
अत्युन्नतां भावय बालवत्स!।
सञ्चाल्य पुच्छं निकटे प्रयान्तं
श्वानं जनानां प्रियमित्रमाहुः ॥ 4

वहन्ति नित्यं शकटं तुरङ्गाः
कर्षन्ति भूमिं वृषभाः श्रमेण।
जीवत्यजोऽस्मानुपजीव्य तस्मात्
सर्वानिमान् पालय वत्स! बाल! ॥ 5

अधीष्व विद्यामुषसि प्रबुध्य
ततः सुगानं कुरु चित्तहारि।
क्रीडाविशेषैः विहरस्व साय-
मभ्यासमेवं कुरु वत्स नित्यम् ॥ 6

मा ब्रूहि मिथ्यावचनं च वत्स!
पैशुन्यकार्यं न कुरुष्व बाल! ।
रमापतिः साह्यकरः सदा नः
तस्मात् न दुःखं भवतीह किंचित् ॥

कुर्वन्ति ये घातककर्म लोके
तान् वत्स दृष्ट्वापि च मा स्म भैषीः ।
निपात्य तान् मर्दय वत्स बाल
तेषां मुखे ष्ठीवनमेव कार्यम् ॥

हे वत्स! दुःखे निकटागतेऽपि
हे बाल! धैर्यं न विमुञ्च नित्यम् ।
दैवं सदा प्रेममयं विभाति
विनाशयेत् तत् सकलं च दुःखम् ॥

आलस्यमूलात् प्रभवन्ति दोषाः
कदापि मा लङ्घय मातृवाक्यम्।
रुदन् हि बालो बलवर्जितः स्यात्
धैर्येण युद्धयस्व सदैव वत्स! ॥

इमां भुवं द्राविडनामधेयां
नमस्कुरु त्वं जननीति मत्वा ।
आवासभूः पूर्वपितामहानां
भात्येष देशस्त्वमृतान्मनोज्ञः ॥

अत्युत्तमा द्राविडवाग्वचस्सु
प्रणम्य तां वत्स पठ प्रकृष्टाम् ।
भाग्यैर्युतं भारतदेशमेनं
दिनेदिने पूजय भक्तिपूर्वम् ॥ 12

दिश्युत्तरस्यां च हिमालयेन
सन् दक्षिणस्यां कुमरीति सीम्ना ।
प्राच्यां प्रतीच्यां दिशि सागराभ्यां
सुरक्षितो भारतदेश एषः ॥ 13

वेदाः समस्ता भुवि यत्र सन्ति
यत्राभवन्नुन्नतवीरवर्याः ।
अखण्डरूपात्मकहिन्दुदेशं
देवस्वरूपं हृदये भजस्व ॥ 14

न जातिभेदः कुलतोऽपि, भेद-
वादः सदा पापनिदानभूतः ।
ये प्रीतिविद्यामतिनीतिभिश्च
भवन्ति पूर्णाः प्रथमाः कुले ते ॥ 15

प्रीतिं परां दर्शय जन्तुवर्गे
सत्यात्मकं दैवमवेहि वत्स! ।
सदा भव त्वं दृढचित्तयुक्तः
स एष पन्थाः सुखजीवनस्य ॥ 16

———

# ज्ञानरथः

## (ஞானரதம்)

## पीठिका

सायङ्कालवेला। तिरुवल्लिक्केणि वीरराघव मुदलिवीथ्यां समुद्राऽभिमुखं स्थितस्य कस्यचित् गृहस्य सौधोपरि श्रमापनोदाय शयान आसम्। मदधिष्ठितप्रथमशालायां चतुर्भ्यः पार्श्वेभ्यः दर्पणवातायनेभ्यः, बहिर्द्वारकवाट प्रदेशेभ्यश्च आगतः रमणीयः समुद्रपवनः तत्स्थलं पूरयन्नासीत्। तस्य च वायोः सायङ्कालशोभया सह मेलनेन जनितां शान्तिं आनन्दं च वर्णयितुमहं न प्रभवामि। "अहो! अद्य स्नात्वा रम्यं अश्वशकटं आरुह्य समुद्रतीरमार्गेण दक्षिणस्यां दिशि अडयार् पर्यन्तमेत्य, मध्ये कालिदासीयं शाकुन्तलं यां काञ्चिदुपनिषदं वा सह नीत्वा, तत्पठनजनितानन्दानुभवपूर्वकं प्रत्यागमनं वरम्" इति चिन्ता मे उदियाय।

"अहहो! अधिकधनाभावे भुवि न केवलं नीचनानासुखानि, किन्तु उत्तमानन्तभाग्यान्यपि अस्माभिः प्राप्तुं न शक्यन्ते" इत्यमंसि।

तदा मे मनः, "मूढ! सर्वेषां मानवानां ईश्वरो दिव्यं ज्ञानरूपं रथं अदात्। स च यथेष्टं दिशो गत्वा स्वाभिमतानि दर्शनीयानि सर्वाण्यपि दृष्ट्वा, प्रत्यागन्तुं समर्थः। तदुपयोगेन सुखमननुभूय, प्रतिक्षणं त्वामधः निपात्य, विषादजनकं नीचं दारुशकटं कुतस्त्वं वाञ्छसि" इत्यवदत्। "सद्यो ज्ञानरथः आनाय्य सज्जीक्रियतामि"ति मद्दूतं संकल्पमाज्ञापयम्। रथ आगत्य तस्थौ। तमारोहम्। किन्तु, मदीयज्ञान-

रथस्य सामान्यरथानामिव न तावान् वेगो वर्तते । बहुदूरं सुखेन नेतुमपि न शक्नोति । ईषत्पङ्गुः । किं क्रियताम ? । विद्यमानेन परिकरेण खलु कार्यं परिसमापनीयम् । अतः तं रथमारोहम् । तमधिरुह्य, मया दृष्टानि दृश्यानि तद्गतान्याश्चर्याणि च ग्रन्थेऽस्मिन् लिख्यन्ते।

# प्रथमोऽध्यायः

## उपशान्तिलोकः

(கவலையற்ற பூமி)

## निर्विचारभूमिः

मदीयज्ञानरथं दृष्ट्वा, "अस्मिन्नेव क्षणे खेदवर्जिता भूः यदि कापि वर्तेत तत्र मां नय" इत्यचोदयम् । अहो! लब्ध्वापि रथमेनं इयन्ति दिनानि विचारमन्तरा मनोव्याकुलतां च विना स्थातुमुपायः मे नैव ज्ञातो बभूव। उद्दाललग्नकीटवत् परितप्यमाने मन्मनसि तन्निवृत्तये कमप्युपायमज्ञात्वा, कति नाम दिनानि विषण्णोऽभवम् । अम्मम्म ! इह लोकचिन्तास्मरणमात्रेण मनो 'गभी' रिति बिभेति । तद्गतां विषशक्तिं किमिति वदेयम् ? 'इमा एव चिन्ताः कस्यचित्पुरुषस्य वदनसौन्दर्यं, शीतता, यौवनमितीदं सर्वमपि नाशयन्ति । नयनयोः प्रकाशमपोह्य तत्र दोषं, देहे वर्णमालिन्यं च उत्पादयन्ति । एभिः अधमैर्विचारैरेव ललाटे रेखाः कपोलयोः वलयश्च जायन्ते । मदीय कण्ठस्थो मधुरस्वर अपययौ । तत्र क्रूरः 'करकरे' ति कश्चित् शब्दः प्रादुरभूत् । वक्षसि अंसयोश्च स्थितं बलमपसरति । त्वरितगमन शीलमपि रक्तं मलिन-जलाशय इव मन्दं प्रवहति । विनश्यति च पादयोर्वेगः । चिन्तारूपा विष-जन्तवः शरीरं अन्तः निःसारं कुर्वन्ति । न केवलं शरीरं, बुद्धिमपि ते कदर्थयन्ति । विस्मृतिं वर्धयन्ति । प्रधानविषयाः सर्वे समये स्मृतिपथं

नायान्ति। अधीतं सर्वं ऊषरे वृष्टमिव निष्प्रयोजनं जायते। ज्ञानं च मेघावृतं गगनमिव प्रकाशरहितं भवति। कल्पनाशक्तिश्च शीर्यते। अहो! विचाररूपाणामेषां अतिसूक्ष्माणां क्रिमीणां सामर्थ्यं, वैद्यशास्त्रनिपुणैः निर्धार्यमाणेषु अदृश्येषु क्रूरतमेषु व्याधिरूपक्रिमिष्वपि न दृश्यते।

"हे ज्ञानरथ! त्वमद्य मां विचारलेशशून्यं देशं नय" इत्यादिशम्। तदा मन आगत्य रथं रुरोध। "स लोको न तावत् सुखमयः। किं विचाराभावमात्रेणाऽलम्?। सुखानुभवयोग्यः अन्यः कश्चित् प्रदेशो भवतः किं न स्फुरति? सर्वथा विचारशून्यदेशे आनन्दोऽपि न स्यादिति मे भाति। उत्तरोत्तरेण किं वा—कारणं किमिति वक्तुं न शक्यते। अथापि तत्र गमनं न मे रोचते।" इति अकथयच्च ॥

कुपितोऽहं, "छी छी! अज्ञानचित्त! तव सदा संभवन्तीं वेदनां व्याकुलतां च पश्यन्नहं दयाविष्टः, कंचित्कालं वा त्वां निर्विचारस्थलं नीत्वा तत्र निक्षिप्य प्रत्यागन्तव्यमित्यचिन्तयम्। किं त्वमेवात्र विवदसे" इत्यखण्डयम्। पुनरपि यथावत् मनः वक्तुमारभत।

चित्तरूपायामस्यां मोहिन्या महमत्यन्तं प्रीतोऽस्मि। प्रथमं कथमयं मोहो बभूव इत्येतत् अत्र विशदीकर्तुं न शक्यम्। तद्रहस्यम्। परन्तु गच्छति काले अहमन्यः चित्तमन्यदित्याकारक भेदभावनायाः विस्मरणपर्यवसायिनी प्रीतिः मोहिन्यामस्यां मेऽवर्धत। मनसाऽनेनानुभूयमानां वेदनां असहमानस्यैव मे शान्तिलोकदर्शने त्वरा बभूव। सम्प्रति अकारणं मनः तन्निराकरोतीदं पश्यतो मे आश्चर्यं, दया, क्रोधश्च युगपदजायन्त। नानाप्रकारैः चित्तमाश्वासयितुं यत्नो व्यधायि। पुनरपि चित्तं मूढप्रत्ययेन निमील्य नेत्रे आग्रहेण तदेव साधयितुमारेभे।

किंकर्तव्यमिति मे न स्फुरति। ततो मनो दृढीकृत्य, "हे मनः! विषयेऽस्मिन् तव वचनमहं न श्रोष्यामि। त्वच्छ्रेयोनिमित्तमेव सर्वमेतत् मयाऽकारि। ज्ञानरथ! सद्यो गम्यताम्" इत्यब्रवम्।

अनन्तरक्षणे उपशान्तिलोकं प्राप्तौ स्वः।

अत्युन्नतस्य दुर्ग प्राकारस्य द्वारमेत्य रथस्तस्थौ। दूरादेव दुर्गस्य द्रष्टुं शक्यत्वेऽपि मदीयज्ञानरथे निकटंगते कवाटानि सद्यः स्वयं विघटिष्यन्त इत्यचिन्तयम्। तथा नाभूत्। किमद्भुतम्! ज्ञानरथेनापि प्रवेष्टु मशक्यः किमयं तावान् पावनो लोक इत्याश्चर्य परवशः अभवम्। चित्तमपि ततोऽपि सहस्रगुणमधिकं चकम्पे। मया सह भाषितुमपि तस्य जिह्वा नाचलत्। दुर्गद्वारबहिःप्रदेशे एको दौवारिकः कृपाणहस्तः तिष्ठन्नासीत्। अग्निप्रभस्य हिमवतोऽपि एकेनैव प्रहारेण चूर्णीकरण समर्थवत् भासमानस्य च तस्य कृपाणस्य उपरि, "विवेकः" इति नेत्रापहारिभिः ज्योतिर्मयैः अक्षरैः लिखितमासीत्। द्वारपालः, "कोऽसि? कुत आगतोऽसि?" इत्याह।

"उपशान्ति लोकं दृष्ट्वा प्रतिनिवर्तनीयमिति बुद्ध्या आगमम्" इत्यभणम्। तच्छ्रुतवान् स 'कटकटे' ति जहास। "कुतो हससि" इत्यपृच्छम्। प्रत्युत्तरमदत्वा सः हसन्नेव अवर्तत।

अभाग्यं तन्मनः एकैकमपि क्षणं बिभेति स्म। मम तु विस्मयो महानासीत्। झटिति द्वारपालमालोक्य, "तात! किमन्तः प्रवेष्टुं शक्यम्? वचनमेकं ब्रूहि। कलकलेति हसन्नेव वर्तसे" इत्यपृच्छम्।

द्वारपालः, "उपशान्तिलोकस्य तव च महदन्तरमस्ति" इति स्वगतं (मम श्रवणपथं प्रविशदिव) उक्त्वा ततः, "मा कुप्य। तात! उपशा-

न्तिलोकं साधारण नाटकशालामिव मत्वा स द्रष्टव्य इति यत्त्वमवोचः तन्मे हास्यमजनयत् । लोकमेनमागच्छतां सामान्यतः नैव बहिर्गमनप्रसक्तिः" इत्युच्चैः जगाद ।

"तदस्तु नाम । अस्माभिः किमन्तः प्रवेष्टुं शक्यते । कृपया ब्रूहि" ।

"साधारणतया त्वमन्तः गन्तुमर्हसि । सर्वेषामपि जीवानामिदं मातृस्थानम् । अत्र नागन्तव्यमिति निरोद्धुं नाहमधिकारी । अथापि त्वया सहागतस्य मनोनाम्नः अस्यासत्यवस्तुनः वैराग्यदुर्गमतीत्यान्तर्गमनयोग्यता नास्ति । तत्प्रविष्टमात्रं अग्निलोक प्रविष्टतूलप्रतिमेव नश्येत्" इत्याह ।

आदौ उपशान्तिलोकनामश्रवणानन्तरमेव यन्मनः चकम्पे; तत्र न गन्तव्यमिति तत् यन्मां प्रार्थयामास, सन्निहिते च दुर्गद्वारे धर्मदेवतायाः पुरतस्तिष्ठन् अधर्मराज इव नष्टस्मृतिः यच्चाबिभेत्, सर्वस्याप्यस्य कारणं किमितीदानीमेवाज्ञासिषम् । ततस्तल्लोकगमन चिन्ता अपासरत् । चित्ते मुग्धोऽहं तद्विनाश्य केवलमहं परं न सुखी भवितुमैच्छम् ।

"मया किं कर्तव्यम्? ब्रूहि" इति दौवारिकमपृच्छम् ।

"अरे! मनुज! नष्टे किल चित्ते उपशान्तिर्भवेत् । यावत्तन्न नश्यति तावत् निर्विचारं वर्तेय" इति स्मरणमेव वृथा । मनोनाम्नी इयं जननी, चिन्तारूपान् राक्षसान् अनवरतमुत्पादयन्ती वर्तेत । राक्षस्यां तस्यां प्रीतिः तव नाद्याप्यपगच्छति । पक्वदशां प्राप्य ततस्त्वं स्वयमेव गन्तुं शक्नोषि । अद्य गम्यतां पुनरागमनाय" इति प्रत्यब्रवीत् ।

सद्यो, दुर्गं द्वारपालक इत्येतत्सर्वमन्तर्हितमासीत् । अर्धक्षणं नेत्रे अन्धकारावृते अभूताम् । निमील्यचक्षुषी अद्राक्षम् । पुनः वीरराघवमुदलिवीथ्यां गृहस्य सौधोपरि खट्वायामेकान्ते शयानमात्मानं समुद्रपार्श्वेभ्यः रम्यवायुप्रसरं चापश्यम् ।

"अस्तु; गतं गच्छतु । उपशान्तिभाग्यं इदानीं मे नालभ्यत । तथापि न चिन्ता । अभाग्यं चित्तं हत्वा एकान्ते केवलमानन्दमनुभवितुं यद्यहं यतेय, तत्कृतघ्नकृत्यं किल भवेत् । मनसा सम्भावितान् विचारान्, बाधाश्चालोचयता मया तन्मूलं लब्धानि महान्ति श्रेयांसि नैव चिन्तितानि । आदौ लोकजीवनस्येदं मन एव निदानमवर्तिष्ट । इदं परब्रह्म इत्येव वक्तुं शक्येत । तस्य मां विना, तदन्तरा मम च के व सुहृदः सन्ति ? । तद्विषये द्रोहो मया कथं नाम विधेयः ? । सन्तु नाम बहुकोटिसंख्याका विचारास्तन्मूलाः । न तावता हानिः । चित्तनाशानन्तरं अनन्यलभ्योऽपि एकान्तवासरूपोऽयमुपशान्तिलोको न मे रोचते" इति निरणैषम् । "उपशान्तिरिति उद्घोषयतो जनान् महाज्ञानितुल्यान् महर्षितुल्यांश्च श्लाघमानाः सर्वेऽपि मूढा द्रोहचिन्तकाश्चेति मे प्रतिभाति" इति मनस्येवाचिन्तयम् ।

एवंविधां मम चिन्तां ज्ञात्वा मनः, "हा तात !" इति दीर्घं निःश्वस्य विगतवेपथु विचाररहितं चाभवत् । ममापि महान् मोदः समजनि । मनोरूपायै मोहिन्यै चुम्बितमेकमदाम् ।

---

# द्वितीयोऽध्यायः

## गन्धर्वलोकः

## (आनन्दलोकः)

परेद्युः, "अद्य कुत्र गच्छेव" इति चित्तमप्राक्षम् ।

"तत् खेदवर्जितं आनन्दमयं लोकमेत्य प्रतिनिवर्ताऽवहै" इत्यूचे ।

"सम्यगवोचः" इति सहर्षमभिनन्द्य, ततो यथापूर्वं ज्ञानरथमारूढो गन्धर्वलोक मयासिषम् । तत्रत्यानि दृश्यानि, अनुभूताश्च भोगाः यथाशक्ति तद्रूपतया अधोनिर्दिश्यन्ते । तत्र केचन भोगाः अस्मद्देशीयधर्माचारणां भिन्ना इति अस्मदीया एव यदि मन्येरन्, तत्कृते मयि दोषो नारोपणीयः । भारतदेशेऽस्मिन् इदानीन्तनैः परतन्त्रजनैः "इदं सुखं धर्मविरुद्धं" "तत्कार्यं निषिद्धं" इति उच्यमानं धर्मोपदेशं श्रुतवतो मे वस्तुतो विस्मयो जायते । महर्षिदेवपरम्परायां आगता अपि अस्मद्देशीया इदानीं लोके स्थितेभ्यः सर्वेभ्य अनागरिकजनेभ्योऽप्यधमा दृश्यन्ते । अरण्येषु, समुद्रेषु च विवस्त्रा मृगप्रायाः सञ्चरन्ति । श्रोत्रनासिकोष्ठभागेषु रन्ध्राणि कृत्वा तत्र शङ्खवलयादीनि धारयन्तः पत्रविशेषाङ्कितशरीराः जना अपि स्वातन्त्र्येण वर्तन्ते । तादृशं महद्भाग्यमपि अस्मद्देशीया नाप्नुवन् । अत्र विद्या मालिन्यमवाप । प्रतिशतं नवति संख्याकाः जनाः अकारो लिख्यतामिति चेत् तत्स्थाने शुण्डामेकां विलिख्य गजलेखनचतुरा भवन्ति । शास्त्राणि सर्वाण्यपि कीटभक्षितान्यासन् । अस्मद्देशस्य ज्ञानकोशरक्षकस्थाने स्थिता विप्राः अर्थज्ञानमन्तरा, असम्बद्धान् कांश्चन मन्त्रान् केदारगतभेका इव केवलमुच्चारयन्तः यथावस्थितं तदर्थप्रभावं ईषदपि

न जानन्ति। महर्षिकुलप्रसूता भूसुराः कृषिकर्म कुर्वन्तः नीचानाश्रित्य सेवकवृत्या धनार्जनपूर्वकं जीवन्तः इतोऽप्यसंख्येयैः नीचकृत्यैः कालं यापयन्तीत्येतत् सर्वजनविदितमेव। अत्र कलाः सर्वा लुप्ता बभूवुः। वीर्यं नष्टम्। बलं, सुखं, भाग्यमित्येते उत्तम पदार्था अपि विनष्टा आसन्। खिन्नमानसैः दुर्बलकायैश्च परतन्त्रजनैः महता कृच्छ्रेण जीवनं क्रियते।

आनन्दमयस्य गन्धर्वलोकस्य वर्णनावसरे खेदभूयिष्ठं भारत-देशमधिकृत्य कतिचन वाक्यानि ब्रुवतो मम दोषान् पाठकाः सहृदः सोढ्वा मामनुगृह्णीयुरिति प्रार्थये। देशेऽस्मिन् धर्मे च सर्वथा लुप्ते, गन्धर्वलोक मधिकृत्य लेखनमनुचितमिति केषांचित् भायात् इति मे विवेकः समजनि। परतन्त्रजनानामेषां धर्माधर्म निर्णयाधिकार एव नास्तीत्यमुमंशं सविनयं निवेदयितुमेव तानि वाक्यानि मया व्यलिख्यन्त।

अन्यच्च, गन्धर्वलोकमवाप्य, तत्रावशतया आनन्दमग्नो-ऽभवम। मनोहरः सङ्गीतध्वनिः शुश्रुवे। स्वर्णकण्ठीनां भ्रमरीणां रीङ्कार इव स ध्वनिरासीत्। नेदमत्रो-चितमुपमानम्। प्राणस्यान्तः गानवर्षं कुर्वत इव भासमानस्य तस्य ध्वनेः किमुपमानं वक्तव्यमिति मे नैवास्फुरत्। "कोऽयं ध्वनिः?", "कुत आयाति"? इत्यचिन्तयम्। न तन्मे बुद्धिगोचर-मभवत्। चक्षुषी परवशे अभूताम्। तत्र स्थितानि भवनानि, आलयाः, गोपुराणि, नाटकशालाः, किं बहुना सर्वाण्यपि गृहाणि रम्यशीतल चन्द्रकिरणा इव स्वर्णप्रभामयान्यासन्। एवं भूमिशिलामृत्तिका-प्रभृतिषु तत्र स्थितेषु वस्त्वन्तरेष्वपि नानावर्णसंवलितां तामेव प्रभामद्राक्षम्।

पाठकमहोदयाः! वर्षर्तौ वृष्टिरहितायां सायङ्कालवेलायां समुद्रतीरे वालुकासूपविश्य, नभसः प्रतीच्यां दिशि सूर्येऽस्तङ्गते तत्किरणानां प्राच्यां दिशि स्थितेषु मेघेषु, तन्मध्यवर्त्याकाशभागेषु च पतनेन जायमानं नानाविधमद्भुतं वर्णवैचित्र्यम् अपि नाम भवद्भिः कदाचित् दृष्टम्? । परतन्त्रदेशेऽस्मिन् प्रकृतिसौन्दर्यं दृष्ट्वा आह्लादितुमवकाशः असकृत् भवतां नैव लभ्येत । अथापि तथाविध दृश्यं एकवारं वा भवद्भिः किं न दृष्टं स्यात्? तस्मिन् दृष्टे सति मयाऽनुभूतः गन्धर्वलोकस्वभावः भवतां यथा विदितो भवेत् तथा किञ्चिद्वक्तुं शक्नुयाम् । लोके च तस्मिन् द्रवीभाव-स्वभावभूयिष्ठाः नानाविधवर्णभेदा एवालक्ष्यन्त । चन्द्रकिरणानां मोहनशक्तिः तैः सह मिश्रिता बभूव ।

प्रभायामस्यां मधुरगाने च मय्यानन्दपरवशे क्षणं तिष्ठति काचित् गन्धर्वयुवतिः मम पुरतः आविर्भूय, "आगच्छ मनुज युवक!" अस्मल्लोके स्थितान् नूत्नान् विशेषान् सर्वानपि ते प्रदर्शयामि" इति हस्तेन हस्तं संयोज्य मां निनाय । युवत्याः तस्या आकृतिविशेषं दृष्ट्वा अहं मुग्धो मूर्च्छितश्च भवेयमितीयं चिन्ता मे प्रादुरभूत्। परन्तु, मनो दृढीकृत्य तां समीक्ष्य "इतः प्रस्थानात् पूर्वमेकं पृच्छामि भवतीम् । तस्योत्तरं दातव्य" मित्यवदम् ।

"पृच्छ" इति स्वर्णवीणा मनुष्यवाचालपन्तीवसाऽवदत् ।

"मधुरोऽयं ध्वनिः मां परवशयति । तत्कुत आयाति?" इत्यभणम् ।

"पश्य उपरिभागे" इत्याह । नीलाकाशे तारागणमध्ये समासीनं चन्द्रमद्राक्षम् ।

"तस्य किरणाः" इत्यूचे ।

"चन्द्रकिरणा वा ? चन्द्रकिरणानां रमणीयध्वनेरस्य च कः सम्बन्धः" इत्यप्राक्षम् ।

चन्द्रकिरणानामेष ध्वनिः स्वाभाविकः । अयं च ध्वनिः लोकेऽस्मिन् स्पष्टं श्रूयते । भूलोके जनानां श्रोत्रपथं नायाति । परन्तु, तत्रापि महाकवीनां श्रोत्रयोः ध्वनिरेष श्रूयेत" इत्याह । एतत् श्रुतवतो मे तन्मयत्वमभवत् । तया युवत्या सह पादमार्गेणाऽगाम् ।

"उड्डयस्व" इति साऽब्रवीत् ।

अहमुच्चैः हसन् , "मामुड्डयितुं नु आदिशसि ? इति कथयन् चकितोऽभवम् ।

क्षीरवदतिधवलौ द्वौ पक्षौ तस्यां स्थितावपश्यम् । पूर्वदर्शनसमये मामावर्जयन्तीमिव स्थितां तां युवतिमधिकृत्य किञ्चिद्वर्णयानि किम् ? कथञ्चिद्यतिष्ये ।

चन्द्रप्रभाशोभि वदनम् । तदुपरि त्र्यङ्गुलप्रमाणः उन्नतः कुसुमनिर्मित एकोऽल्पकिरीटः । अभक्ष्यस्वरूपा अपि परेषां भक्षणयोग्या इव स्थिताः दन्ताः ।

स्वकीयैः दुग्धपक्ष्मभिः अविकृतो दिव्य आकारः । स्पृष्टॄणां शरीरस्यान्तः आनन्दमयीं विद्युच्छक्तिं प्रसारयन्ताविव स्थितौ द्वौ करौ । भूलोकरमणीनां वर्णनावसरे गन्धर्वच्छायेति कथनं सम्प्रदायः । अस्याः आकृतिं छायां च किमिति वर्णयेयम् ? दिव्य आकारः, दिव्या छाया ।

"भूलोकस्थितोऽपि त्वं गम्भीराभिर्दृष्टिभिः पश्यसि" इति वाक्येन मे लज्जामुत्पाद्य, "सदा चिन्तामग्नो मा भूः। उड्डयस्व" इत्याह।

किंनामधेया त्वं?" इत्यपृच्छम्। "सम्यगस्ति, मय्येकं ब्रुवत्यां त्वमेकं भाषसे। मन्नाम्ना किं ते?"

"ब्रूहि, पश्येयम्।"

"पर्वतकुमारीति कृतनामधेयाऽहम्। कुमारीत्यपि मामाह्वयन्ति"।

"समीचीनम्। त्वन्नामोच्चार्य मया त्वं किमाकारयितुं शक्या?"

"अस्तु"

"तथैव" हे पर्वतकुमारि! कथमहमुड्डयेय? "तवेव मे पक्षौ स्तः किम्?" इत्यप्राक्षम्।

इहागमनसमये मयि किं पक्षौ त्वमपश्यः?

"त्वन्मुखं दृष्ट्वा त्वन्मयतां गतेन मया तत्किमिति द्रष्टुं नाशक्नवम्। उड्डयनप्रस्तावारम्भसमय एवाद्राक्षम्"

"पश्चात् स्तुतिः क्रियताम्। कथय, किमादावेव पक्षौ दृष्टिगोचरौ आस्ताम्?"

"नादृश्येताम्"

"अस्मिन् लोके उड्डयनसङ्कल्पे कृतमात्रे श्वेतमयौ पक्षौ प्रादुर्भवतः। उड्डयनीयमिति त्वमपि मनसि सङ्कल्पय"।

"तथैव"।

"सम्प्रति मच्चक्षुषोरन्तः त्वदाकृतिं पश्य"।

दिवाप्रकाश इव भासमानायां चन्द्रिकायां कुमार्याः रमणीय-नेत्रयोरन्तर्भागे एकाग्रतयाऽपश्यम् । तत्र गन्धर्ववेषेणावस्थितां मदाकृतिं पश्यतो मे महान् विस्मयोऽभवत् । अहो ! स्वप्नेषु मया दृष्टोऽयं मदाकारः । आमयरहितः सङ्कोचशून्यः भूसम्बन्धवर्जितः सुन्दरमयश्च । सद्यो मे द्वौ पक्षावाविर्भूतावहमपश्यम् । मदीयरूपेषु जातं विचित्रपरिणामं दृष्ट्वा तुष्टः सन्, अहं सद्यः कुमार्या मुखमपि व्यलोकयम् । मन्नेत्रयोः सङ्केतेन मन्मनसि उद्भूतमाशयं सा व्यजानात् ।

"अहो ! मच्चक्षुषी पश्येति तां प्रत्युक्तवत्या मया किल बह्वपराद्ध"मिति सा ऊचे ।

"कुतः?" इत्युक्त्वा अहसम् ।

इयन्तं कालं मनुजदेहधारिणं त्वां गन्धर्वरूपधारिणीं मां मत्वा प्रवृत्तिमकार्षीः । इतः परं मामपि आत्मना तुल्यां मंस्यसे ।"

"प्रियरूपिणि ! प्राप्तैश्वर्यस्यापि मे त्वद्दर्शनजनितं कुतूहलं नापगमिष्यति । अथापि त्वत्साम्यमहं लब्धुमिच्छामीत्येतत् तव सन्तोषायैव खलु भविष्यति ? "

"सत्यम्"

ततः उभयोः नेत्रे मिथः मिलिते अभूताम् ।

"चक्षुषोः परस्परं मेलने वचसा किं प्रयोजनम् ? ।।

"उड्डयस्व" इति कुमारी जगाद ।

नूतनतया हृदयप्रोत्थेन प्रेमोद्रेकेण वा पक्षयोः साह्येन वा स्वभावतः अयस्कान्तं अनुसरन्त्याः सूच्या रीतिमनुसृत्य वा अहमपि तामेवान्व-

गच्छम्। यत उड्डयनमतिसुलभं स्वाभाविकं चावर्तिष्ट, तेन पक्षौ सहायौ कृत्वा उड्डये" इति बुद्धिरेव न तदानीमुदभवत्।

"कुत्र याहि ? तव भवनं प्रति किम् ?" इत्यपृच्छम्।

"ममेदं गृहम्। तस्येदं गृहम्।" इत्याकारकभेदबुद्धेरत्र प्रसक्तिरेव नास्ति। इच्छालोकोऽयम्। पक्कज्ञानदशायामिव सम्पूर्णानन्ददशायामपि अभेदबुद्धिर्भासेत। अत्र स्थितानां भवनानां सर्वेऽपि स्वामिनः। सर्वे सर्वत्र वस्तुं प्रभवन्ति। समुद्रपरिसरे स्थितं सुगन्धभवनं प्रति त्वां नेष्यामि।"

"भेदोऽभेद इत्येवं प्रौढाभिर्वचोभिर्भाषसे। कुत्र वेदान्तमपठः?"

भोगस्थितिं सम्यक् जानतामद्वैतज्ञानं स्वत एव जायेत। अज्ञातभोगैरुच्यमानमद्वैतं मिथ्यैव। भूलोके तथाविध ज्ञानाभिनयो बहुलं दृश्यते। अस्माकमपरोक्षज्ञानमतिसुलभम्। परोक्षज्ञानमपि तथैव। इत उपशान्तिलोको नातिदूरे वर्तते। भोगमूर्तेर्विष्णोः योगनाथस्य परमशिवस्य चाभेदं किं न जानासि त्वम्?। इदं सर्वमस्तु। ज्ञानविचारस्य नायमवसरः। अधः सर्वत्र दृष्टिं प्रसारय" इति साऽऽह।

नगरे तालवृक्षद्वयोन्नतप्रदेशे डयमानोऽहं गन्धर्वलोक भवनानि, सङ्गीतशालाः, क्रीडामण्डपाः तद्गतवैचित्र्याणि एतत्सर्वं पश्यन्नगच्छम्।

उड्डयनोद्भव आनन्दो न साधारणः। भूलोकवासिषु जन्तुषु पक्षिण एव नितरां सुखमनुभवन्तीति मन्तव्यम्। जलप्रवाहे प्लवनं कंचित्कालं सुखावहम्, आकाशे डयनं सर्वथा सुखावहम्। तत्रापि पर्वतकुमारीव काचित् मार्गसहायभूता यदि लभ्येत, यावज्जीवमुड्डयमान एव स्याम्। गन्धर्वभोगमादर्शं कृत्वा जीवन्ति पाश्चात्याः। व्योमयानं निर्माय

गच्छम् । "यत उड्डयनमतिसुलभं स्वाभाविकं चावर्तिष्ट, तेन पक्षौ सहायौ कृत्वा उड्डये" इति बुद्धिरेव न तदानीमुदभवत् ।

"कुत्र याहि ? तव भवनं प्रति किम् ? " इत्यपृच्छम् ।

"ममेदं गृहम् । तस्येदं गृहम् ।" इत्याकारकभेदबुद्धेरत्र प्रसक्तिरेव नास्ति । इच्छालोकोऽयम् । पक्वज्ञानदशायामिव सम्पूर्णानन्ददशायामपि अभेदबुद्धिर्भासेत । अत्र स्थितानां भवनानां सर्वेऽपि स्वामिनः । सर्वे सर्वत्र वस्तु प्रभवन्ति । समुद्रपरिसरे स्थितं सुगन्धभवनं प्रति त्वां नेष्यामि ।"

"भेदोऽभेद इत्येवं प्रौढाभिर्वचोभिर्भाषसे । कुत्र वेदान्तमपठः?"

भोगस्थितिं सम्यक् जानतामद्वैतज्ञानं स्वत एव जायेत । अज्ञातभोगैरुच्यमानमद्वैतं मिथ्यैव । भूलोके तथाविध ज्ञानाभिनयो बहुलं दृश्यते । अस्माकमपरोक्षज्ञानमतिसुलभम् । परोक्षज्ञानमपि तथैव । इत उपशान्तिलोको नातिदूरे वर्तते । भोगमूर्तेर्विष्णोः योगनाथस्य परमशिवस्य चाभेदं किं न जानासि त्वम् ? । इदं सर्वमस्तु । ज्ञानविचारस्य नायमवसरः । अधः सर्वत्र दृष्टिं प्रसारय" इति साऽऽह ।

नगरे तालवृक्षद्वयोन्नतप्रदेशे डयमानोऽहं गन्धर्वलोक भवनानि, सङ्गीतशालाः, क्रीडामण्डपाः तद्गतवैचित्र्याणि एतत्सर्वं पश्यन्नगच्छम् ।

उड्डयनोद्भव आनन्दो न साधारणः । भूलोकवासिषु जन्तुषु पक्षिण एव नितरां सुखमनुभन्तीति मन्तव्यम् । जलप्रवाहे प्लवनं कंचित्कालं सुखावहम्, आकाशे डयनं सर्वथा सुखावहम् । तत्रापि पर्वतकुमारीव काचित् मार्गसहायभूता यदि लभ्येत, यावज्जीवमुड्डयमान एव स्याम् । व्योमयानं निर्माय गन्धर्वभोगमादर्शं कृत्वा जीवन्ति पाश्चात्याः ।

प्रवर्तयन्ति। परन्तु तमोगुणभूयिष्ठास्ते स्वकीयां नव्यचातुरीं आनन्दमये मार्गे प्रयोक्तुं न जानन्ति। निर्मितानां व्योमयानानां प्रवर्तनपद्धत्यां सम्यगशिक्षितायामेव भाविकालयुद्धं नभस्येव भवेद्वेति अमुं विषय-मधिकृत्य बहुधा विम्रष्टुमारेभिरे । युद्धं, मारणं, इत्यदिविषयेष्वेव सर्वथा दत्तावधानास्ते, अत्र विषये तदनुसर्तुमसमर्था भवन्ति ।

अन्यच्च, यक्षलोकं प्राप्तवतो मम प्रथमं अनिवार्यो मतिभ्रमः विस्मयश्च अभूतामिति पूर्वमवोचम्। क्रमेण तयोर्निवृत्तयोः सतोः आनन्दानुभवमात्रमेवशिष्टमासीत्। वैशद्यं बुद्धौ उदभवत्। उषस्युत्थाय मुखं संशोध्य, समुद्रतीरमेत्य पश्यता, यथा सर्वं सुस्पष्टं साक्षात्कर्तुं शक्यं' नभोमार्गेण गच्छतो ममापि अधोभागेषु विद्यमानाः सर्वेऽपि विषयाः तथा सुस्पष्टमदृश्यन्त । तदा मया दृष्टानां सर्वेषां विषयाणां सामग्र्येण निरूपणाय सहस्रादप्यधिका अध्याया अपर्याप्ता भवेयुः । कतिपयानेव विषयानत्र निर्दिशामि ।

## कन्दुकक्रीडा

कस्याश्चित् वेदिकाया उपरि गन्धर्वबालाः कुसुमकन्दुकैः क्रीडन्त आसन्। तानि कन्दुकानि स्थलपद्ममयानि ।

एको बालः, "अयि रसिके! कन्दुकं सर्वथा मत्करस्थस्य दण्डस्यालभ्यं कृत्वा बुद्धिपूर्वकं वक्रमार्गेण मन्मुखमुद्दिश्य क्षिपसि। नेतः परमहं त्वया सह विहरिष्ये" इत्युवाच। एतत् श्रुतवन्तो बालाः सर्वे 'खली' रिति जहसुः । एवं सर्वे बालाः एकीभूय भाषमाणाः अन्योन्यं संघट्टयन्तो हसन्तश्च बहुधा क्रीडां चक्रुः। परन्तु स एको बालः स्थलपद्मसवर्णे स्फटिकमयासने एकान्ते साचीभूय, अधोऽवनतदृष्टिः तां क्रीडां पश्यन्नवर्तत ।

पर्वतकुमारीं दृष्ट्वा, "तत्र एकाकी कश्चिदुपविष्टोऽस्ति किल ? कोऽसौ बालः ?" इति अप्राक्षम्।

"मम सहोदरः सः। चित्तरञ्जन इति तस्य नामधेयम्। बालोऽप्ययं कुलदेवतायाः कामधेनोः अनुग्रहपात्रीभूतः अन्यैर्बालकैः सह क्रीडितुमनिच्छन्, कथानिर्माणेन रम्यदिवास्वप्नदर्शनेन च कालं नयति। पूर्वं किरीटरामोपरि कन्दुकं प्रयुक्तवत्यां रसिकानाम्न्यां कन्यकायां चित्तरञ्जनः दिव्यं प्रेम प्रदर्शयति। अद्य यां काञ्चित् कवितां अयं रचयतीव। आह्वयाम्येनमहमत्र। तस्य काव्यश्रवणं किं ते अभिमतम् ?" इति सा बभाण।

ससम्भ्रममहं, "निरधिका प्रीतिः तच्छ्रवणे" इत्यब्रवम्।

बालेनाधिष्ठितां दिशमवलोक्य पर्वतकुमारी हस्तसंज्ञामकरोत्। पक्षौ प्रसार्य निमेषमात्रेण आवाभ्यामधिष्ठितं स्थलमाजगाम सः।

तमाश्लिष्य चुम्बितं दत्वा, "अयमागतोऽस्ति अस्मल्लोकदर्शनाय। अतिथिरयम्" इति कथयन्ती सा मां निरदिशत्। "वन्दे मातरं" इति कथयन् स बालो मां ननाम। आलिङ्ग्य तं मूर्धन्युपाघ्राय, आशीर्वचनानि तस्मै अवोचम्। ततः अपाङ्गैः पर्वतकुमारीं दृष्ट्वा कविताविषयं तामस्मारयम्।

अनुजं पश्यन्ती सा, "वत्स! रञ्जन! हृदय एव यां कवितां त्वमरचयः तां ब्रूहि। श्रोतुमयं वाञ्छति" इत्यभाषत।

बाल इषद् व्रीडामगमत्।

"वत्स व्रीडां माकार्षीः। वद" इत्यहमवोचम्।

रसिकया कन्दुकप्रेषणं, तेन किरीटरामस्य कोपजननमित्यमुं विषयमधिकृत्य, भूलोकस्थितप्राकृतभाषासमायां मधुरपदगुम्भितायां गन्धर्वभाषायां चित्तरञ्जनो गातुमारभत। पर्वतकुमार्याः भ्रातुः कण्ठो मधुर आसीदिति किन्तु लेखनीयम्?"

## मदनोत्सवः

अतीतेषु कतिपयेषु दिनेषु आवयोरनुमतिं लब्ध्वा, चित्तरञ्जनः अपागमत्। ततो नभोमार्गेणावां अगच्छाव। चन्द्रकिरणेषु जातो मधुर-ध्वनिः, भवनेषु नानाभोगैः कालं यापयतां गन्धर्वयुवतीनां बालानां यूनां वृद्धानां च अद्भुतदृश्यानि च प्रयाणवेलायां मेऽतीव मनोहराण्यासन्। भूलोकवासमनुभवति मयि भोगेषु विद्यमानान् इयतो विशेषान् काल्पनिकदृष्ट्यापि नैवाद्राक्षम्। किञ्चिद्दूरं गत्वा पर्वत-कुमारी, "तत्र पश्य" इत्युक्त्वा मह्यं यत्किञ्चिद्दर्शयामास।

"अहहो! अहहो! कस्तत्र विशेषः?" इति मया सा पृष्टा।

अतिविपुलमेकं भवनं तत्र ददृशे। पञ्चाशत्सहस्रादप्यधिका जनाः तत्र सम्मिलिताः स्युरिति मेऽस्फुरत्। महान् सङ्घः। अत्रत्याः भूलोक-वर्ति जनसङ्घ इव अन्योन्यं संघट्टयन्तः स्वयं पतन्तोऽन्यान् पातयन्तः अन्यान् पादेन मर्दयन्तः सङ्कुचितवदनाः स्विन्नगात्राश्च नावर्तन्त। गन्धर्वसमूहं प्राप्ता इमे सञ्चारवेलायां परेषामीषदपि बाधामज-नयन्तः प्रसन्नवदनाश्चासन्। पुरत आगच्छन्तीनां स्त्रीणां मार्गदानाय इमे सद्यः पक्षौ प्रसार्य, उपर्युत्प्लुत्य तासां गमनानन्तरमधोऽवतरेयुः। मनोहरं महान्तं चेमं सङ्घं पश्यतो मम, महदाश्चर्यमभवत्। गन्धर्वसङ्घं प्राप्ता इमे अन्योन्यमालिङ्गन्ति, चुम्बन्ति, क्वचिद्विनीता अन्योन्यं

नमस्कुर्वन्ति । हसन्तो भाषन्ते च । एषु कियान् स्नेहः! कियान् विनयः! सर्वमिदं वर्णयितुमेव न शक्यते मया।

"अयि पर्वतकुमारि! कस्तत्र विशेषः?" इति तामपृच्छम्।

"भवनप्रान्ते मण्डप एको वर्तते। दृश्यतां सः"।

"दृष्टः"

"तत्र शुकवाहनस्योपरि किं निक्षिप्तमस्ति?"।

"मदनविग्रहः"।

"तस्योत्सवः" इति सा जगाद।

मदनस्य तां प्रतिमां पश्यन्नहं अनुपदं निश्चेष्टोऽभवम्। "हे कुमारि! केनेयं निर्मिता प्रतिमा?" इत्यपृच्छम्।

"अस्मद्देशीयशिल्पिभिः"।

अद्यत्वे भारतदेशे क्रमेण क्षयं प्राप्य, अन्ततो नष्टप्राया शिल्पकला मे स्मृतिपथमाजगाम।

"अहहो! गन्धर्वलोकमवाप्यापि स दरिद्रो देशः न विस्मृतः?" इत्युच्चैरकथयम्।

"कञ्चित्कालं अद्य गन्धर्वरूपं प्राप्तवानपि त्वं, जन्मना न भेदं प्राप्तोऽसि इतीदं जानीहि" इति पर्वतकुमारी मामुवाच।

"ततस्तु एवंविधाः प्रतिमाः भवद्देशे किं बहुसंख्याकाः सन्ति?" इत्यवदम्।

श्वः त्वां अमृतप्रस्रवणस्यान्तिके विद्यमानां चित्रशालां प्रति नेष्ये। तत्र सर्वं स्वतो द्रक्ष्यसि" इत्याह सा।

एवं कुमार्या सह मय्यालपति मदीया दृष्टयः मदनविग्रहदर्शनात् न न्यवर्तन्त।

"शिल्पकलायां इयन्तं वैदुष्यं प्राप्तानामपि एषां भवद्देशीय शिल्पिनां, "अनङ्गस्याङ्गकल्पनमयुक्तमित्ययं विषयो न ज्ञातः। अद्भुतमेतत्" इत्यवदम्।

"युज्यते। नरलोकादागत्य गन्धर्वविद्यायां दोषमारोपयति भवान्। एवंविधा निरुपमाः प्रतिमाः अस्मद्देशेऽन्यत्र कुत्रापि द्रष्टुं न शक्यन्ते। किञ्चित् सावधानतया पश्य। बहुकृत्वः सश्रद्धं इमा दृष्टवतोऽपि ते प्रतिमाया याथार्थ्यं मयाऽनुक्तं सत् स्वत एव न विदितं भविष्यति।"

मृत्तिकया शिलाविशेषेण वा प्रतिमेयं न निरमायि; किन्तु मनोमयेन सूक्ष्माकाशरूपेण पदार्थेनेयं निर्मिता आसीत्। मनसि जातस्य कामदेवस्य अयमेव तात्त्विक आकारः। विग्रहस्यास्य निर्मातारं मयं द्वितीयब्रह्मेत्येव वयं व्यवहरामः। आदिब्रह्मणा निर्मितो मदनः सजीवस्तिष्ठति। स्वभावतः प्राणैर्विहीनापीयं प्रतिमा कलामयैः प्राणैः संयोजिता वर्तते" इति सा अकथयत्।

एकैकस्यापि दृश्यस्य लेखनावसरे, "आश्चर्यपरवशोऽभवम्" इति कथनं चर्वितचर्वणमेव स्यात्। गन्धर्वलोक एवाद्भुतो लोकः।

"मन्मथविग्रहस्यान्तिके रतिविग्रहो हि न दृश्यते" इत्यपृच्छम्। "गन्धर्वलोकरहस्यमिदम्। त्वयि वक्तुमनुचितम्" इत्याह सा।

"इदानीं अस्मिन् क्षणे अहमपि गन्धर्वोऽस्मि इति त्वं न स्मरसि"।

"तर्हि, विमृश्यमाने त्वमेव ज्ञास्यसि। तदस्तु। किञ्चिदधोऽवतीर्य, सर्वं सम्यक् पश्यावः। आयाहि। अत्र स्थित्वा सम्भाषणाद्वरं तत्र गत्वा दर्शनम्" इत्याह सा। ईषदधोऽवतीर्य उत्सवविशेषान् सर्वान्-

व्यपश्याव। एकत्र मदनस्य पूजा प्राचलत्। अन्यत्र तद्दहनमारभ्य तस्य पुनरुज्जीवनपर्यन्ताः कथाः प्रतिमाभिश्चित्रैश्च स्पष्टं निरूपिता आसन्।

वसन्तकालः चित्रैः लिखितः तत्र ददृशे। स्वभावत एव तदानीं गन्धर्वलोके वसन्तकालः प्रवर्तते।

तस्मादेव तदा मदनोत्सवमकुर्वन्। अतः गन्धर्वशिल्पिभिः कृतानां कार्याणां प्रकृतिदेवतापि स्वतः साह्यं कुर्वतीवाऽवर्तिष्ट।

गायन्तः कोकिलाः, कुसमभरिताः पादपाः, वाप्यः, अन्योन्यं विहरन्तो मृगाः, भ्रमराः, मलयानिलैरानीयमानो मृदुमकरन्दरेणुः एवमादीनि सर्वाण्यपि वसन्तकालप्रेक्षणीयानि निश्चितसत्यान्यासन्। तत्र देवदारुपादपैर्निर्मिते कस्मिंश्चिन्महति मण्डपे, सूर्यकान्तोपलरचितायाः वेदिकाया उपरि उपविश्य, निगृह्य चित्तं, नेत्रत्रयदृष्टि मधिनासिकाग्रे निक्षिप्य निश्चेष्टं स्थितस्य प्रशान्ततरङ्गस्य जलधेरिव परमशिवस्य प्रतिमा प्रतिष्ठिता अवर्तत।

अग्रे तपसा श्रान्ता सौन्दर्यदेवतेव तपोवेषेण पूजां कुर्वती पार्वती तस्थौ। तस्याः पश्चात् इक्षुमये धनुषि सुमशरान् सन्धाय प्रतीक्षमाणो मदन इवैका प्रतिमा अतिष्ठत्।

अन्यत्र, कामदहनकथा चित्रे लिखिता अलक्ष्यत। चण्डकोपनायाः सत्यदेवतायाः परावृत्य स्थिताया इव परमशिवस्य मुखे क्रोधानलपूरिते ललाटगतात् ज्ञानदृष्टेः प्रादुर्भूतेनाग्निप्रवाहेण मन्मथदाहदृश्यं तत्र चित्रितमासीत्। तद्दर्शनेन मे भीतिरुदियाय। पर्वतकुमार्या हस्तेन संयोजितं मम हस्तं हठात् आकर्षम्।

पर्वतकुमारी कटकटेति हसित्वा, "चित्रं दृष्ट्वा बिभेषि?" इत्याह। देवालयेषु काम-तत् केवलं चित्रमेवेति मन्मनसि दार्ढ्यं नाभवत्।

विग्रहस्य निकटे रतिदेव्याः अभावेऽपि अत्र स्थितायाः तन्मूर्त्या निकटे "आहा!" इति आक्रोशन्ती स्थितेव रतिदेवता लिखिताऽदर्शि। तस्या मुखे देहे च दृष्टः शोकः मया वर्णयितुमेव न शक्यते। गन्धर्वशिल्पिनां शिल्पशलाका कुत्र? मन्दस्य मे लेखनी कुत्र? अनयोः कियदन्तरमस्ति!

अन्यत्र पार्श्वे परमशिवः पार्वतीमूढ्वा तया समेतस्तिष्ठति। रतिदेवी आगत्य भर्तारं प्रणमति। मन्दस्मितं कृत्वा परमशिवेनानुगृहीतो मदनः भस्मनः सजीवमुत्थाय, तौ दिव्यदम्पती शिरसा प्रणमन् तयोरुपरि बाणान् प्रयुङ्क्ते। पार्वती भर्तारमालिङ्गति। एवमनङ्गदेवालये एकैकस्यापि दृश्यस्य पुरतः गन्धर्वा आगत्य बहुधा तुष्टुवुः। काश्चन स्त्रियः वीणां हस्तेनादाय जगुः। अपरत्र युवानो युवत्यश्च द्वन्द्वशो मिलित्वा वलयाकारेण तिष्ठन्तः बह्वीभिः क्रीडाभिर्विजह्रिरे।

## पक्षिविहारः

एकस्यां दिशि एको युवा एका युवतिश्च अन्योन्यदर्शनेन मोहितौ प्रतिमेव निश्चेष्टौ तिष्ठन्तावास्ताम्। एवमेव बहूनि विचित्राणि दृश्यानि। अन्यस्यां दिशि पक्षिविहारः प्राचलत्। अन्तराले ते बहुभिः प्रकारैः अन्योन्यं कन्दुकवद्भ्रामयन्तः सङ्गीतशास्त्रमर्यादामनतिक्रम्य विजह्रुरित्येतन्महदद्भुतम्। कृतासु तासु क्रीडासु एकाऽतिमनोहराऽवर्तत। मध्ये एका युवती। तस्या हस्तचतुष्टयपरिमितदेशे तिष्ठन्तौ द्वौ युवानौ चक्रनेमिरिव क्वचिदुच्चैः क्वचिदधश्चेति अधरोत्तरं क्रमेण भ्रमन्तौ वर्तेते। यदा एकः शिरोभागे तिष्ठति तदैवापरः पादभागे वर्तेत। मध्यवर्तिन्याः हस्तपरिमिते दूरे द्वे युवत्यौ अक्षदण्डं परितश्चक्रवद् भ्रमत्यौ स्याताम्। यदा एका वामहस्तस्य अग्रभागमागच्छति तदैवापरा दक्षिणकरस्याग्र-

भागमागच्छेत् । एवं भ्रमणे प्रवृत्ते एकैकस्मिन्नपि भ्रमणे एवंविधः समागमः प्रसज्येत किल। ते उभे सुन्दर्यावपि मेलनावसरे चुम्बनं कुर्वन्ताविव ओष्ठैः यं शब्दमुत्पादयेतां स शब्दः मध्ये स्थित्वा वेणुं वादयन्त्याः कस्याश्चित् तालं वादयन्निवादृश्यत । एवंविधानां सहस्र-संख्याकानां दृश्यानां समवायः एको वलय इत्युच्यते। अर्धनिमेषानन्तरं प्रकारमिमं परित्यज्य प्रकारान्तरेण विहारः ।

"कालो गतः । आवां समुद्रतीरं गच्छावः" इत्याह पर्वतकुमारी। तथाविधमुत्सवं विहाय गन्तुं मनो नैव वाञ्छति। अथापि पर्वतकुमार्याः वचनमुल्लङ्घयितुं कस्य वा मतिर्जायेत ?

## समुद्रतीरम्

उड्डयमानावेव आवां समुद्रतीरमागच्छाव। सन्निहिते च जलधौ प्राणस्यान्तः प्रविश्य परिणामजननशीलः रमणीयश्च, सुगन्ध एकः तत्र प्रादुरभूत् । अनेन, कुमार्या कथितं सुगन्धभवनं सन्निहितमासीदिति अज्ञासिषम् । "भवनेऽस्मिन् इयान् सुगन्धः कथं जातः?" इति प्रष्टुं यदाहमुद्युक्तः, ततः पूर्वमेव सा मदभिमतं जानती एवमवदत्।

"कस्तूरीमयशिलाभिः दिव्यचन्दनपादपैश्च भवनमिदं निरमायि । अन्यच्च, एतत्परिसरवर्त्यारामेषु भूलोकेऽप्यदृष्टपूर्वाः नानासुगन्धि-कुसुमपादपाः सन्ती"ति ।

एवमालपन्तावेव सुगन्धभवनस्योपरितनं सौधमवतीर्णौ स्वः । अद्रा-इत्थमावामिव द्वन्द्वशः तत्रागतान् समुद्रदर्शनोत्सुकान् बहून् श्रमापनोदाय क्षम् । एकस्मिन् स्थले निक्षिप्तयोः आसनयोरुपरि साचीभूयोपाविशाव। हंसतूलिका सदृशेन केनापि वस्तुना निर्मिते उभे आसने अपि दुकूलावृते अभवताम्। तत्रोपविष्टस्य मे मातुरङ्कगतस्येव मनःशान्तिरासीत्।

अग्रे जलधिः। तत्र चन्द्रकिरणानां योगेन तेजोरूपान् प्राणान् प्राप्ता इव स्थिताः तरङ्गाः। धवलकुसुमपर्वता इव भासमानानि प्रवहणानि। अतिदूरे प्लवमाना हंसा इव द्योतमाना मनोहरा नौकाः।

नभसि चन्द्रः, श्वेता मेघाश्च प्रकाशन्ते। मेघेषु तेषु केचन प्रसारितजालानीव, अन्ये तु चलदूर्मय इव, अपरे तु विशीर्णकुसुमानीव जलधौ प्लवमानानां नौकानां नभोरूपदर्पणे प्रतिफलितछाया इव चैवं बहुधा अलक्ष्यन्त। नभोगतानि नक्षत्राणि, आकाशसिन्धोरुद्धिय उत्थितानि वज्राणीव, विशीर्णभोगा इव, तेजोरूपं मधु पिपासतां मनोरूपाणां भ्रमराणां व्योमरूपे ह्रदे कल्पितनानाकुसुमानीव दिशा-रूपस्याऽप्रमेयस्य वस्तुनः ईश्वरज्ञानरूपेणाप्रमेयेन वस्त्वन्तरेण सह सङ्घट्टनसमये उत्थितास्तेजः कणा इव चादृश्यन्त।

नौकामाश्रित्य द्वन्द्वशो गच्छतां गन्धर्वमिथुनानां मध्ये तुष्टाः केचिदगायन्; ननृतुश्चापरे। अन्ये तु वीणादिवाद्यानवादयन्। सर्वेपीमे तरङ्गध्वनिरूपस्य प्राकृतभेरीनिनादस्य सर्वदानुमोदनं कुर्वन्त इवावर्तन्त। एतन्मध्ये चन्द्रकिरणाः यथावत् सुवर्णभ्रमराणां नव्यं निनादमुत्पादयन्त आसन्। समुद्रानिलस्तु पर्वतकुमार्याः ललाटगतैः कुटिलकुन्तलैः साकं रममाणो बभूव।

हा! रूपेण गन्धर्वतां प्राप्तोऽपि जन्मना मनुष्यः सन्नेवाहं इयन्तं सुखं सोढुं न शक्नोमि। इन्द्रियाणि निर्वीर्याण्यासन्। बुद्धिप्रसरः कुण्ठित आसीत्। आनन्दमयजलधितरङ्गेषु फेनखण्डवत् मम प्राणाः अल्प-परिमाणा आसन्। आनन्दमयं चण्डमारुतं प्राप्तः तृणखण्डसमः मदीयः प्राणो बभ्राम। कीदृशं सौन्दर्यम्। कथम्भूतं गानम्। दृश्यं च कीदृशम्। पर्वतकुमार्या सह असम्बद्धं यत्किञ्चिद्भाषितुमारभे। बहुभोगानुभवेन

नष्टज्ञाने मयि नष्टरश्मिः अरण्याश्व इव जिह्वा मे यथेच्छं भाषितु मारभत। तेन सुखे अलंबुद्धिरासीदिति नाहं ब्रवीमि। सुखभोक्तरि मयि तिष्ठति, स्वयं भोक्तृ भूत्वा सुखमेव मां भोज्यं कृत्वा भक्षयामास। इत्थं भाषमाण एव निद्रावशोऽभवम्।

किंचित्काले गते प्रबोधमलभे। सन्निहितः सूर्योदयः। अन्योन्य-माश्लिष्टाविव समुद्राकाशौ यत्र सङ्गमं प्राप्नुतः तस्मिन् स्थले जातः तेजोमयो बाल इव सूर्यबिम्बः प्रादुरभूत्। तेन प्राच्यां दिशि नभसि सर्वत्र वह्निप्रवाहो व्याप्रियत। वह्निं वमद्भिः द्वीपैः समा मेघाः प्राकाशन्त। मेघानामपि मनुष्यबुद्धि रस्तीत्येव मन्ये, यतः स्वभावसिद्धं स्वगतमन्ध कारमपोह्य आत्मनः कान्तिप्रदातारं सूर्यमपि इमे आच्छाद्य घ्नन्ति।

"परस्परं प्रेमजीवनं कुरुत" "प्रीतिरेव परमशिवः" इति धर्मसूक्ष्ममुक्त्वा यो यूथजातीयानुद्धर्तुं मेने, यस्य जन्मना तज्जातीयानां कीर्तिगौरवे अवर्धेतां, तादृशं क्रीस्तुमहामुनिं त एव यूथजातीयाः वैरेण किं न जघ्नुः ? ते हन्तुं यत्नमकार्षुः इति तस्यार्थः। परन्तु अन्ते हन्तुं नाशक्नुवन्। क्रीस्तुमहामुनिरद्यावधि सजीवस्तिष्ठति। धर्मरक्षणार्थं जनेषु विद्यमानप्रीत्यर्थं च लोकनिन्दानिग्रहरूपां मरणशलाकां अधिरुह्य विद्यमानानां जनानां हृदये क्रीस्तुमहामुनिरेव सदा विराजते।

मेघान् तान् पश्यतो मम पारिचेयप्रभृतयो यूथगुरवः क्षणमात्रं स्मृतिपथमाजग्मुः। ततः उपरि स ज्योतिर्मयो बिम्ब आविरासीत्। वज्रायुधसमैः स्वीयकिरणैः मेघान् भित्वा विशीर्णांश्च कृत्वा बालसूर्यो जयघोषयुतः प्रसार्य किरणान् जगत्यां बन्धाद्विमुक्त इव तेजःस्वरूपो बभौ। तेन च तुतोष लोकः। गन्धर्वनार्यः भूपालरागे गायत्रीदेवीं गायन्त्यस्तुष्टुवुः।

## निर्झरः

"एहि निर्झरम् ; उत्तिष्ठ ; स्नातुं गच्छाव" इत्याह मदीयजीवित-नौकायाः क्षेपणीव स्थिता सा बाला पर्वतकुमारी ।

निर्झरतीरमागतौ स्वः । अत्युन्नतात् पर्वतशिखरात् निर्झरो द्वेधा भूत्वा मध्यस्थिते तटाके पपात । ततः पुनरपि भूतले पतति । बहवः कवयः निर्झरस्य कुसुममालामुपमानत्वेनावोचन् । न तन्मह्यं रोचते । आकाश रामायण समुद्र प्रभृतयः स्वतुल्योपामानान्तररहिताः स्वस्य स्वयमेवोपमानतां प्राप्य वर्तन्त इत्यभियुक्तोक्तरीत्या निर्झरोऽपि उपमा-नान्तररहित इति मन्तव्यम् । आवयोरागमनात्पूर्वमेव बहवस्तत्रागत्य स्नानं कुर्वन्त आसन् । तैस्तैः कृतां स्नानप्रक्रियां दृष्ट्वा विस्मयोऽभवत् । अधुना (लेखनकाले) भूलोके स्थित्वा यत्पुनर्लिख्यते तत्र किञ्चित् जिह्वेमि । भुवि केचित् लेखने भाषणे परं नितरां पावनाः, सङ्कल्पे आचरणे तु....? । अधः पतितो निर्झरः क्षुद्रनदीरूपेण प्रवहति । तस्याः नद्याः तीरे सर्वत्र अल्पाल्पाः शिलाः । एकैकस्यामपि शिलायां एकैकमपि गन्धर्वमिथुनं द्रष्टुं शक्यम् । ताभ्यः शिलाभ्य उत्थाय निर्झरं प्रदक्षिणी कृत्य, अन्तराले किञ्चित् स्थित्वा ततः स्वस्वाधिष्ठितां शिलां ते प्राप्नुयुः । शुद्धात्मनां सर्वोऽपि विषयो निर्मल इव भासेत । गन्धर्वलोके कस्यापि हृदि विकल्पबुद्धिर्नोदेति । अतः वस्त्रधारणादिविषयेऽपि न तावतीं लज्जां ते प्रदर्शयन्ति । हा! कियत्सौन्दर्यम् !

बहवः निर्झरे स्नात्वा निकटस्थितेषु देवालयेषु स्वस्वाभिमता देवताः बहुधा, आनर्चुः । चित्रकलायां महासमर्थानां आवासभूतेऽप्यस्मिन् लोके केचनदेवालयाः प्रतिमारहिता एव वर्तन्ते । आलयशिखरे तेजोमयैरक्षरैः 'ओम्' इत्योंकारो लिखितोऽवर्तिष्ट । उत्सवक्रीड

प्रधानेषु आलयेषु परं प्रतिमाः स्थापयन्ति। आत्मशक्तिसम्पादनाय कल्पितेषु स्थलेषु प्रतिमाः न प्रतिष्ठाप्यन्ते। सर्वे स्वां स्वामिष्टदेवतां चित्ते साकारां प्रणमन्ति । "योगस्य भोगस्य चास्त्येव सम्बन्धः। गन्धर्वलोकात् उपशान्तिलोकः अति समीपे तिष्ठति" इति कुमार्या यदुक्तं तस्याशयः मया क्रमेण ज्ञातो बभूव । सौन्दर्यपिपासया विचिन्वतां तत्त्वमपि सहैव लभ्येत ।" "सत्यमेव सौन्दर्यं; सौन्दर्यमेव सत्यम्" इति योगी कश्चिदाह । आवां उभावपि देवालयं प्राविशाव । "कुमारि! इष्टदेवतामर्चयितुं उचितोऽयं देवालय इति ब्रवीषि। का ते इष्टदेवता ? त्वं कां पूजयिष्यसि ? " इति तामप्राक्षम् ।

"ममेष्टदेवता मदनः। तमहं भजिष्ये। त्वमपि इष्टां देवतां वृणीष्व" इति कुमारी जगाद ।

"त्वमेव मे इष्टदेवता । त्वामेवाहं पूजयेयम्" इत्यहमब्रवम् ।

"साधु! साधु!" इति ब्रुवती सा जहास। ततः "सखे! मनोवाञ्छितमेव देवता। येन रूपेण त्वं तां भजसे तेनैव रूपेणागत्य सा त्वामनुगृह्णाति । का नाम देवता ? आदर्शरूपा हि सा । सैव चित्तलक्ष्यमित्युच्यते । तदेव सत्यम् । तदेव सौन्दर्यम्" इत्याह ।

"सत्यं," 'भुवि नरजन्मप्राप्तवता रामवद्वर्तितव्यम् । न ततः श्लाध्यमन्यदस्ति' इति ब्रुवतो राम एव परमा देवता। विस्मृत्यात्मानं स्वसुखमप्यनादृत्य, सौन्दर्यप्रवाहे त्यक्तप्राणः पर्वतकुमारीं यद्यहं देवतारूपिणीं भावयेयं सैव मे मोक्षसाधिका भविष्यति। पुरा कालिदासो दासीगृहे पूजां चकार इत्यस्मदीयैरुच्यमानायामसत्यकथायामपि याथार्थ्यमस्त्येव ।

आलयमेत्य, एकान्ते प्राङ्मुखीभूय, पद्मासनमास्थिता नेत्रयोः पारवश्यं प्रदर्शयन्ती पर्वतकुमारी, "ओंनमो ब्रह्मणे" इत्युक्त्वा बहुवारं जजाप। अहमपि तस्याः पुरतः पद्मासने उपविश्य त्रिभिरपि करणै स्तामेव चिन्तयन्, "ओं नमः कुमार्यै" इत्युच्चारयन् योगमग्नोऽभवम् । तत आवामुभावपि ध्यानादुत्थितौ स्वः । "प्रस्थीयताम्" इति सा संज्ञां चकार। उदयभानोः बालकिरणान् पिपासाशमनावधि यथेच्छं पिबन्तावेवाऽऽकाशमार्गेण आवां प्रस्थितौ । एवं प्रस्थाय गच्छतो रावयोः चित्रशाला सन्निहिताऽभवत् ।

"अहो! कीदृशे महत्तरे कर्मण्यहं प्रविष्टवानस्मि! सामान्यतः कलकत्तानगरे विद्यमानायाः प्रदर्शनशालाया वर्णनार्थमेव ग्रन्थ एको रचनीयो भवति । गन्धर्वलोके चित्रशालायाः सर्वाणि प्रेक्षणीयानि कथमहं यथावद्विलिख्य प्रदर्शयेयम् ?"

"चित्रशालां गच्छावः । एहि । पूर्वेद्युः प्रकृतिसौन्दर्यं दृष्टमासीत् । अद्य प्रातः निर्झरो व्यलोकि । इतः परं भवद्देशे कृत्रिमसौन्दर्याणि द्रष्टुमहमभिलषामि । नभ इदं महदतिरमणीयं च । नातिदूरे परिदृश्यमानस्य पर्वतशिखरस्य व्योम्ना सह सङ्गमस्थलं कियद्रमणीयमस्ति, पश्य" अहो! अत्र स्थित्वा एतद्दर्शनेन स्वयमेव कालो गच्छति । चित्रशालां गच्छाव" इत्यब्रवम् । पर्वतकुमारी उच्चैर्जहास । तस्या अपाङ्गयोः परिहासचिह्नमदृश्यत ।

"कुमारि! एवं यदि त्वं हसेः तदा न मे त्वमिष्टदेवता भविष्यसि । चुम्बितं ते दद्यां पश्य" इत्यवदम् ।

ततोऽपि द्विगुणमहसत् सा । अहमपि तां भापयन्नेवाशिक्षयम् । क्रोधपूर्णाभिर्दृष्टिभिः सा मां ददर्श । "आदावेव खलु त्वं मया प्रबो-

धिताऽसि। तथा सति किमर्थं पुनस्त्वमहसः?" इति सविनयं तामपृच्छम्।

"तदर्थं न मे कोपः। गन्धर्वस्त्रीणां दण्डनदानावसरे तद्भक्तैः कपोलभागौ न स्पृश्येत। त्वं क.....कः..."इति स्खलितवागभवत्।

गन्धर्वलोकसम्प्रदायमनुसृत्यैव विचित्रापराधिन्याः तस्याः ओष्ठभागयोः मया शिक्षा व्यधायि।

उच्चैर्हसित्वा, "मूढसखे! इयमेव चित्रशाला" इति सोवाच।

तदा स्तब्धोऽभवम्।

"कुमारि! परिहससि। किमियं चित्रशाला?"

"सत्यम्। अस्मद्देशे चित्रशालायां पूर्वं रामनाथनाम्ना केनचित् शिल्पिना निर्मितं इदं वनप्रदर्शनम्। अत्र वनत्वभ्रान्तिः यत्ते जाता नात्र कश्चिद्विशेषोऽस्ति। गन्धर्वलोकवासिनोऽपि किमिदं तात्त्विकं वनं? उत कृत्रिममित्यजानन्तः असकृन्मुह्यन्ति" इत्याह कुमारी।

ततः प्रतिमाभिरलङ्कृतं मण्डपमेकमगच्छाव। तत्र जीवगणानां प्रतिमाः एकत्राऽलक्ष्यन्त। चक्षुषोरविषयान् दूरदर्शिनीदर्पणेन द्रष्टुं योग्यान् क्षुद्रजीवान् विना अन्याः सर्वा अपि जन्तुप्रतिमाः प्रायशः तत्र दृष्टाः। ग्रन्थपञ्चकेष्वपेक्षितपाण्डित्यमभिरुचिं चालब्धवानहं तानि दृश्यानि स्वच्छन्दमनुभवितुमशक्तोऽभवम्। अन्यत्र गन्धर्वप्रतिमाः विभज्य प्रतिष्ठिता बभूवुः। सोत्साहं तत्स्थलमगाम्। अत्यन्त रमणीयानि स्त्रीपुरुषदृश्यानि तत्र न बहुलं दृश्यन्ते। अचेतनेषु पदार्थेष्वपि एतावत्सौन्दर्यं दृष्टतो मम तन्नमस्कर्तुं बुद्धिरुदेति। तथा सति कस्यचित्पुरुषस्य स्त्रियो वा मुखे चैतन्यप्रभासंवलितसौन्दर्यसहिते

सति तदतीवाह्लादकरमासीदिति किं वक्तव्यम् ? अतिरमणीयस्य मनुष्याकारस्य दर्शने सर्वदैव मे उत्कटेच्छा जायेत। परन्तु भूलोके सौन्दर्यपरिपूर्णाः स्त्रियः पुरुषा वा प्रायशो न सन्ति। मनुष्येषु शुचित्वशान्त्योरभावेन भूलोकजनाः बहुलं विकृताकाराः उपलभ्यन्ते ;चित्तवृत्तेः शरीरे द्रष्टुं शक्यत्वात्। तत्रापि मम जन्मदेशे दारिद्र्येण रोगेण तन्मूलपारतन्त्र्येण च नरा नार्यश्च दर्शनेऽपि नेत्रसङ्कोचजनकाः अत्यन्तविरूपाश्चोपलभ्यन्ते। महामतिभिः शिल्पिभिः रचितेषु चित्रेषु प्रतिमाविशेषेष्वेव भूलोकवासिनां जनानां सौन्दर्यं किञ्चिदिवालुप्तं सत् दृश्यते। अस्मद्देशीय महाकविप्रभृतयोऽपि विषयेऽस्मिन् बहूपकुर्वते। अस्यां दशायां चित्रकलामिमां यदि वयं न संरक्षेम तर्हि भाविजीवसन्ततिः अचिरादेवान्धा भवेत्।

अन्यच्च चित्रशालायां गन्धर्वप्रतिमादर्शने न तावती तन्मयता मे बभूव, यावती पूर्वं मदनविग्रहदर्शनसमये समजायत। अत्रस्था दिव्याः प्रतिमाः विना, अन्याः साधारणप्रतिमाः गन्धर्वशिल्पिनां क्रियाकौशलं व्यञ्जयन्त्योऽपि चित्तगतमाशयं बहिः प्रकाशयितुं समर्था नाभवन्। ग्रीस् देशप्रतिमाः नितान्तं लोकविश्रुता वर्तन्ते। एषां कर्तारः शिल्पिनः असम्पूर्णमानुषाकारान् दृष्टवन्तोऽपि प्रतिभाशक्त्या परिपूर्णसौष्ठवमनुमाय तासु शिलासु स्थापयामासुः। एवंविधाः पाश्चात्याः न केवलं शिल्पकलाकर्मनिपुणाः ; किन्तु वरपुरुषाः देवतानुग्रहपात्रीभूताश्चेत्यस्माभिः प्रस्तूयन्ते। येनकेनचित्प्रकारेण सर्वेऽपि गन्धर्वाः सम्पूर्णलावण्यं प्राप्ता विराजन्ते। तेन तत्रत्यशिल्पिनां स्वीयप्रतिभाशक्तिप्रकटनाय अवकाशो नैव वरीवर्ति। तत्र मया दृष्टाः प्रतिमाः अत्यन्तरमणीया आसन्नित्येतत् सत्यमेव। स्त्रियः पुमांसश्च प्रतिमातुल्यसौन्दर्यसहिता एत्र भान्ति। मदन्तिके स्थितां जीवप्रतिमारूपां प्रियकुमारीं

विना अन्या रमणीया काचित् प्रतिमा अत्र भवेद्वेति बहुकृत्वः अन्विष्यापश्यम् । नालभ्यत ।

भोजनाय आवां प्रस्थितौ । पञ्चानामपीन्द्रियाणां आनन्दप्रदायिनि लोकेऽस्मिन् जिह्वेन्द्रियस्य श्रेष्ठमातिथ्यं किं न लभ्येत इति मत्वा, सहर्षमगाम् । उद्यानवनं सन्निहितमासीत् । शीतले लतामण्डपे स्थित्वा पर्वतकुमारी, "रञ्जन !" इति कंचिदाजुहाव । किञ्चिद्दूरात् तस्या अनुजश्चित्तरञ्जनः अत्राययौ । "मम अस्यातिथेश्च भोज्यमानीय देहि" इत्याह सा । भावगर्भितं हसन्नेव स ययौ । अतीतेषु कतिपयेषु निमेषेषु सुहृदा केनचिदन्वास्यमानः चित्तरञ्जनः स्वर्णभाजनानि हस्तेन वहन् आवयोः पुरतः स्थितायाः शिलाया उपरि न्यक्षिपत् । तद्भोज्यं कीदृशं स्यादिति सञ्जातकुतूहलः अपश्यम् । फलादन्यत् किमपि न तत्रावर्तत । मदीयमन्तराशयमिङ्गितैरेव जानती सा एवं वक्तुमारेभे ।

"सखे! आहारविषये अस्माभिः विशेषमादरं प्रदर्श्य, तदर्थं बहुरसभूयिष्ठानां पदार्थानां अन्वेषणादिना भवद्भिरिव विशेषश्रमो नानुभूयते । जिह्वेन्द्रियं अन्येषां चतुर्णामपीन्द्रियाणां महावैरि गण्यते । भोजनसुखे अतीव श्रद्धालवः, श्रोत्रनेत्ररूपाभ्यां दिव्येन्द्रियाभ्यां उत्तमसुखं सम्यगनुभवितुमसमर्था भवेयुः । प्राणरक्षणार्थं केवलं अन्नमश्नद्भिरस्माभिः भोज्यवस्तुषु सौख्यं नान्विष्यते । अथापि रसवन्ति इमानि फलानि भुक्त्वा पश्य । पश्चात् ज्ञास्यते" इत्याह सा । दिव्यरसयुतानां तेषामास्वादनेन आवयोः क्षुत् शान्ता बभूव । ततः मधुभाजनानि आनाय्य न्यधात् चित्तरञ्जनः ।

तेनानीतानि तानि मया नैवास्पृश्यन्त ।

"पर्वतकुमारी परावृत्य मामपश्यत्" ।

"नास्ति मे अभ्यासः" इत्यवोचम।

"न हि भूलोकोऽयम्" इत्याह सा।

"भवल्लोकपवनः, तेजः, शैत्यं, रम्याणि दृश्यानि, सहायिनी भवती इतीमानि मतिभ्रमणाय किं नालम्? । इतोऽपि मधुपानं अन्यत्किमपेक्ष्यते?" इति बहुधोक्त्वा, अन्ततः कुमार्याः निर्बन्धेन मधुभाजनं शून्यभाजनमकरवम्। आनन्दानुभवस्य परा काष्ठा अभवत्।

भोगो नाम कश्चित् ज्वरः। ज्वरकाले उष्णाधिक्ये शैत्यमपि प्रवृद्धं सत् सन्निपातज्वरं यथोत्पादयति तथा सुखस्य शिखरे दुःखमपि जागर्ति। उपरिष्टात् बहुधा नानाप्रकारा भोगाः अन्ये च मया दृष्टाः। बहूनि दिनानि यातानि। गतेषु तेषु स्मृतिपथमागतेषु कदाचित् तानि एकक्षण इव, समयान्तरे एकैकक्षणोऽपि आनन्दमयं एकं युगमिव च प्रतीयते।

बहवो वासराः अत्ययुः। कुमार्यपि मम प्रियसखी बभूव। मया स्वप्नेऽप्यदृष्टपूर्वं चित्तोल्लसितं शोकव्याध्यधैर्यदुःखानां सर्वात्मना विस्मरणावस्थां चाहमविन्दे। अथापि मनसि तुष्टिर्नावर्तत। न्यूनता काचिदस्तीत्येव भासते स्म। काले गच्छति गन्धर्वलोक-सुखान्यपि न केवलं कषायितानि, किन्तु साधारण सुखेभ्यः निर्विशेषाण्येवालक्ष्यन्त। आदौ मयाऽनुभूतायाः तन्मयत्वस्थितेः इदानीं नैवास्ति प्रसक्तिः। समुद्रज्योत्स्ना प्रभृतीनां प्रकृतिसौन्दर्याणां दर्शनेन तन्मयत्वं प्राप्तवतोऽपि मम कपटचित्तं तत्र स्थिरमवस्थातुं शक्तं नाभवत्। अहो! कुमार्यामपि जातो ममानुरागः अद्य क्षीणो बभूव।

एकस्मिन् दिने प्रातः एकान्ते उपविश्य, एवं मयाऽचिन्त्यत। "अहहा! आनन्दस्याऽऽवासभूतं लोकमेतमागत्यापि चित्तमिदं न तुष्यति। अत्रत्याः सर्वे कृतमेव कार्यं पौनःपुन्येन कुर्वन्तोऽपि प्रसन्नवदनाः सुखं वसन्ति। अत्र विषये असन्तृप्तिः एषां जातेव न प्रतिभाति। मम परं औषधेनाप्यनिवार्यः मनोरोगः कश्चित् प्रादुरभूत्। किमिदमद्भुतम्!"

इत्थं चिन्तयति मयि, यतः कुतश्चित् व्योममार्गेण कुमारी मत्समक्षमागत्य उपाविशत्। ततः यथावत् मच्चित्तगतिं जानती सा नूत्नान् अपूर्वान् कांश्चन विषयान् मह्यमुपादिशत्।

"मित्र! अत्रत्यानां कृत्येषु नूत्नता कापि नास्तीति मन्यसे त्वम्। भूलोकवासिनां जीवनं किं त्वया विस्मृतम्? तत्र परं नूत्नता काचित् वर्तते किम्? मनुष्यमृगेषु भाग्यवन्तः केचन मृगाः यौवन एव म्रियन्ते। अन्ये अशीतिं, नवतिं, शतं वर्षाणि जीवन्ति। जनित्वा अष्टमे वयसि भोक्तुमारब्धमन्नं अशीतितमवर्षपर्यन्तमपि न सामान्यं मन्यते। मनुज! भूलोके वसन्तो जनाः अन्नवस्त्रयोः कृते असत्यं भाषन्ते; परान् प्रतारयन्ति; नटन्ति; वञ्चयन्ति; अपहरन्ति; हिंसन्ति; घ्नन्ति। शरीरं, ज्ञानं, पारतन्त्र्येणाऽऽत्मानमपि विक्रीणते। मनुज! भुवि दरिद्राः सर्वे प्रायशः आत्माभिमानरहिताः दासवृत्तिं कुर्वन्ति। अल्पसुखार्थं तैः सर्वमपि क्रियते। धनिकेषु बहुलं चौर्यमेव दृश्यते। दुर्बलास्तु जुगुप्सितनीचगुणसम्पन्नाः दृश्यन्ते। सर्वेपीमे कृतस्य कृतस्य पुनः करणं विना किन्नाम नूत्नं किंचित् कुर्वन्ति? भुक्त्वा, सुप्त्वा, नटित्वा च अन्ततो म्रियन्ते। अस्मल्लोके नास्ति मरणभीतिः; न वा मिथ्याभाषणस्य प्रसक्तिः। एवं कपटनटनवेषधारणा-

नार्जवादयः पातकगुणाः अत्र न भवन्ति चेत् तन्मूलकानां दुःखानां सद्भावे का वा प्रसक्तिः? अथापि अस्माकं जीवनपद्धतिः ते तृप्तिं न जनयति चेत् कस्तत्र दोषः? सर्वथा अधमं मानुषं जन्मापि कयाचन विधया अस्माकं जन्मतोऽपि श्रेयो भवति, यतः आत्मज्ञानसम्पादनाय तस्यात्यन्तावश्यकता वरीवर्ति। सर्वत्रासन्तुष्टिनामकः गुण एको मनुष्यजन्मनां न केवलमलङ्कारभूतः, अपि तु गौरवप्रदायकोऽपि सन् विभ्राजते। अधिकसंख्याकाः जनाः बुद्धौ नैर्मल्याभावेन विस्मृततत्त्व-ज्ञानाः कीटवत् विनश्यन्तीत्येतत् यद्यपि सत्यम्। अथापि केचन परमं स्थानं प्राप्नुवन्तीत्येतदप्रतिक्षेप्यम्। मुक्तिप्राप्तये देवैरपि नरजन्म ध्रुवं स्वीकर्तव्यमित्ययं विषयः त्वया श्रुत एव भवेत्। तत् यथार्थमेव। भूलोके अवतीर्णानां शङ्कर शुक जनक कृष्ण बुद्ध येशुक्रीस्तुप्रभृतीनां महात्मनां लोकेऽस्मिन्नवतारो न तावान् सुलभः। माया हि शृङ्खलारूपा। तत्रापि कनकशृङ्खलया बद्धानामस्माकं असन्तुष्टिः झडिति न जायते। भवत्सु नानानियमविधानेन महान्तोऽपि सत्वरं सर्वत्रासन्तृप्ता भवन्ति। तद्भिन्नाश्च सन्ति द्वित्रा महात्मानः। चुम्बने, गानश्रवणे च परमियं समर्था इति मां एतावता मन्यमानस्त्वं सम्प्रति महासन्यासिन्या इव भाषमाणाया मम वचनानि श्रुत्वा अतीव चकितोऽसि। आजन्म निर्मलं ज्ञानं लब्धवतां अस्माकं सर्वे विषयाः अनायासेन बुद्धिं प्रविशन्ति। अनुभवे तान् स्थापयितुं परं न पार्यते। तत्कृते नरजन्मनः आवश्य-कता दुर्निवारा" इत्याह सा। अस्याः एवंविधं भाषणमपि न तावत् आश्चर्यं ममाजनयत्। प्रतिक्षणं मम मनोविपरिणामं जानत्यपीयं किरातकी भाषणावसाने किमप्यजानती बालमृगीव यन्नेत्राभ्यां मामपश्यत् तदेव मम महदाश्चर्यमभवत्।

"कितवे! हे वञ्चकि!" इत्यन्तर्गतमवोचम्।

"एकवारं दण्डं विधेहि" इति प्रार्थयामास सा । स दण्डः कीदृश इति पूर्वमेवोक्तः । "न त्वं मे प्रिया । किन्तु महान् वृद्धर्षिः" इत्यभणम् । "सर्वं एकरूपमेव गम्यतामि"त्युक्तं तया ।

ततः बहुकालपर्यन्तमावां प्राणैः अभिन्नाविव सङ्गतौ आस्व ।

---

## तृतीयोऽध्यायः

### सत्यलोकः

परेद्युः सत्यलोकमगच्छम् । तत्र सूर्यालोक इव निर्दुष्टं ज्वलदेकं तेजो व्यलोकि । परन्तु नभसि सूर्यो नासीत् । लोकस्यास्य मध्यभागे दिव्या एका आकृतिरुपविष्टाऽवर्तत । तस्याः मुखादेव मरीचय आविर्भूय निःसृताः । तत्किरणानां प्रभा आकाशं सङ्कट्यन्तीव अदृश्यत । सर्वासु दिक्षु मदीयं रथमचोदयम् । तत्तद्देशीयजनाः स्वे स्वे कर्मणि विशेषादरं प्रदर्शयन्त इव गच्छन्ति । केचित् स्विन्नगात्राः सखेदं पादमार्गेण प्रयान्ति । अपरे रथमारुह्य गच्छन्ति । पक्षौ प्रसार्य महता वेगेन डयन्तेऽन्ये । केचित्प्रसन्नवदना भाषन्ते । अपरे तु श्रान्ता इवादृश्यन्त । अन्ये केचित् झडिति आविर्भूय तं प्रकाशं द्रष्टुमसहमानाः हस्ताभ्यां नेत्रे आच्छाद्य, तदा तदा निलीयन्ते । एवमन्तर्हिताः मामिव नूतनतया लोकमेनं द्रष्टुमागता इति, अत्र स्थातुं चासमर्थाः सन्तः अन्यान् लोकान् प्रविशन्तीति चाज्ञासिषम् ।

अत्र केचित् देवतुल्याः ददृशिरे । त एव विस्मितवदनाः सोत्साहं सवेगं च इतस्ततः सञ्चरणयोग्याः । मनुष्यवेषधारिणो मत्सदृशास्तु श्रान्ता ददृशिरे । गन्धर्वलोकं प्रविष्टमात्रे मयि, जातः देहविपरिणामः अत्र नैवाजायत । पलायनं कृतवन्तः सर्वेऽपि मनुष्यजातीया एव । महोदरः करधृतस्वर्णवलयश्च कश्चित् तदा तत्राजगाम । अनन्तरक्षणे रुदन्नेव सः पलायांबभूव च । भार्यापुत्रसमेतः अपरस्तत्राऽऽययौ । "कुतो मामत्रानयः ? आपणवीथी, देवालयः, तटाकः, विहारस्थलं, किं बहुना, अन्ततो मृत्तिकापिण्डोऽपि न दृश्यतेऽत्र । सर्वोऽप्युन्मत्त इवेतस्ततः परिभ्रमंस्तिष्ठति । पुत्रसमेता एकाकिनी क्षणमप्यत्र नाहं वसेयम् । ग्रामं गच्छावः । प्रस्थीयताम्" इति भारवाही वृषभ इव स्थिता काचित् चुक्रोश । स नरः, "तिष्ठ! अयि तिष्ठ! किरणमेकं परं दृष्ट्वा ततः प्रतिनिवर्तये । मा त्वरय" इत्याह । "किरणो वास्तु मरणं वास्तु । आगच्छन्तु" इत्युच्चैः सा क्रन्दति स्म । स्वयं गन्तुमनिच्छन्नपि सः तस्या वचनं प्रतिघटयितुमसहमान इवान्तर्दधे । अन्यः कश्चित् ग्रन्थराशिं शकटे आरोप्य अत्रानयामास । अन्येषु सर्वेषु मौनेन स्थितेषु अयमेक एव सन्निकटमागत्य, "किं भोः! उत्कृष्टा इमे ग्रन्थाः । यद्भवते रोचते सम्यक्परीक्ष्य मूल्यं दत्वा तत्किं गृह्यते?" इत्यपृच्छत् । तदानीमेव तत्र स्थिते शकटे वह्निसात्कृते तेन ग्रन्थान् भस्मीभूतान् दृष्ट्वा, "तत्र पश्यतु भवान्" इत्यहं तस्यादर्शयम् । स मनुजः उदरे आस्ये च प्रहरन् सत्यलोकं च निन्दन्नेव जगाम ।

एवं बहवो जनाः चित्तस्थैर्यवर्जिताः, विषयासक्तचित्ताः, सत्ये कपटप्रीतिमन्तः, वेषधारिणश्च असकृदागत्य सद्योऽन्तर्धानं प्राप्नुवन्ति । अपरं च, विना तं नरं न कोऽप्यन्यो मां प्रति बभाष इति पूर्वमेव मयाऽवाचि । विद्याभ्यासाय अन्यस्य

साहाय्यमपेक्षितमिति महान्तो वदन्ति । तदपि सत्यमेव । किन्तु सत्यान्वेषणाय एकान्तवास एव श्रेयानितीदं इदानीमेव मे सुस्पष्टं ज्ञातमासीत् । सत्यान्वेषणाय गच्छता अन्यः कोऽपि सह न नेतव्यः । अवगते च तत्त्वार्थे पश्चात् तस्यान्यत्रोपदेशः युक्तो भवेत् । स एव धर्माय । किन्तु आदौ असहायेनैव गन्तव्यम् । साह्यार्थं यद्यन्यं नयेः, तेन सह ते वाग्विवादो वर्धेत । प्रतितर्कप्रयोगेण अन्ततो बुद्धिर्न विकसिता भवेत्; प्रत्युत कलुषितैव । शुद्धबुद्धावेव तत्त्वमुत्पद्येत । परेण सह तत्त्वान्वेषणार्थं गच्छन्तं त्वां सः एकस्मिन् मार्गे नयेत् । त्वं मार्गान्तरे तं नेतुं प्रयतेथाः । द्वयोः अन्यतर एव हि सन्मार्गो भवितुमर्हति । युवयोरन्योन्यकलहे संप्राप्ते तन्निवृत्तये "त्वदुक्तमपि मास्तु; मदुक्तमपि मास्तु । अन्येन केनचित् तृतीयेण मार्गेण गच्छाव" इति नियमबन्धो हि क्रियेत युवाभ्याम् । एवं सामरस्यकल्पनमन्तरा कथं नु तृप्तिर्भवेदुभयोः । अयं समरस मार्गः, पङ्कपूरितगर्त जलाशय वापीकण्टक शिलातल वालुकादि समेषु क्लिष्टप्रदेशेषु युवां नेष्यति । आदौ स्वाभाविकतया स्थितयोः मार्गयोर्द्वयोः मध्ये तात्त्विकं मार्गं विहाय, मार्गान्तरगमनमपि कदाचित् क्षेमायैव । यतः तत्राऽऽन्तं गत्वा सत्यमन्विष्य, तदलाभेन पुनरपि ततः प्रतिनिवर्तनसमये सन्मार्गे प्रवेशः अनिवार्यो भविष्यति । युवां न तथा करिष्यथः । समरस मार्गमेवावमलम्बेयाथाम् । स तु पन्थाः शून्यं स्थलं प्रति त्वां नयेत् । ज्ञानिनामभिमते सामरस्यमार्गे मया दोषोद्भावनं क्रियत इति न मन्तव्यं भवद्भिः । सामान्यजनैः क्रियमाणं सामरस्यं सर्वथा न साधु इत्येतदेव बहुकृत्वः निवेदयामि भवताम् । अनेनेदं स्पष्टं विदितमासीत् यत् सत्यलोके यात्रां कुर्वन्तो जनाः निरर्थकभाषणेन कालं न यापयन्तीति । तस्मात् अन्येषां बाधां जनयितुमनिच्छता मया मौनमवालम्बि ।

किरणपरिशोधने न मे प्रवृत्तिरजनिष्ट । तत्र मध्यभागे स्थितस्य दिव्याकारस्याऽन्तिकं एकदैव गन्तव्यमिति मे यदाऽस्फुरत् तदैव उपर्येको ध्वनिः शुश्रुवे । तत्र मे मतिः प्रवृत्ता । स ध्वनिः एवमाह, "मध्यवर्ति रूपमेव परंब्रह्मेत्युच्यते । तच्च सत्यमयम् । सहसा तदन्तिकं गन्तुं न केनापि पार्यते । किरणमेकमवलम्ब्य तद्द्वारा क्रमशः कणशश्च तत्र गन्तव्यम् । एकदैव धावित्वा तत्प्राप्तव्यमिति यत्नं कुर्वन् त्वं वृथा ते रथं मा विनाशयेः" इति ।

अहं अलससार्वभौमः । किरणास्तु अतीव दीर्घाः । तानवलम्ब्य कीट इव मन्दं मन्दं गन्तुं नाहमभिलषामि ।

"साधु । अयं ब्रह्मविचारः पश्चादस्तु । सम्प्रति देशममुं वलयवत् प्रदक्षिणीकृत्य विशेषान् द्रक्ष्यामि" इति मत्वा रथं प्रदक्षिणं अचोदयम् ।

किञ्चिद्दूरं गत्वा अन्यादृशीं विचित्रां वर्णप्रतिभामपश्यम् । स एव नूत्नो वर्णः तस्मात् स्थानात् सर्वत्र व्यापृतः प्राकाशत । "किमिदमद्भुतम्" इति ससम्भ्रमं अन्यं देशमगाम् । गच्छति च क्रमेण मयि नूत्ननूत्ना वर्णाः जाज्वल्यमानाः ददृशिरे ।

नानावर्णसमूह एव सत्यपदार्थः इति व्यजानाम् । बहोः कालादनन्तरं उत्तरदुर्गद्वारसमीपमागतोऽहम् । तत्र स्थितस्य मम चक्षुषोः पुरतः तदेव दिव्यं ब्रह्मणो रूपमभात् । किमिदं स्यादिति सकुतूहलमपश्यम् । तदानीं इदमद्भुतमदर्शि मया । अतिसूक्ष्मेक्षिकया तद्रूपं यावदहं पश्यामि तदा तन्मुखमण्डले तेजः क्रमशो वर्धितुमारभत । तेज आधिक्येन तद्द्रष्टुं मन्नेत्रे नाशकताम् । ततः चक्षुषी निववृताते ।

पुनरपि यथावत् ध्वनिराविरासीत्। "रे मनुज! सत्यं वस्तु सर्वेषां सुस्पष्टं ज्ञातमिव प्रतीयेत। सावधानं यदि त्वं पश्येः तदा ते नेत्रे संकुचिते स्याताम्। सधैर्यं किरणमार्गेण तदन्तिकं गच्छतस्तव चक्षुषी खेदवर्जिते भविष्यतः। अन्ततः निकटमागते त्वयि करतलामलकवत् सत्यं वस्तु सुविशदं निर्मलं चावगम्येत" इति।

तद्वाक्यं श्रुतवतो मे किरणमेकमनुसृत्य गमनं किन्तु शक्यं स्यात् इति बुद्धिरासीत्। सद्यः आलस्यनामाऽयं गुणः मनसि प्रादुरभूत्। "अहो! भूलोकप्रभावं भाग्यं च प्राप्तुं मयि वाञ्छति स एवायं दुष्टो गुणः आगत्य तत्सर्वं नाशयति स्म। अद्य विधिवशेन मनोरथाः सर्वे स्वत एव नष्टा बभूवुः। सत्यान्वेषणाय सत्यलोकागमनसमयेपि स दुष्टो गुणः आविर्भूय इदं नाशयति" इत्येवं बहुधा व्यचिन्तयम्।

रोदनेन किं फलम्? विषादेन वा को लाभः? न कोऽपि। पूर्वक्षणे कृतं कर्म उत्तर एव क्षणे फलिष्यति। स्वकृतस्य कर्मणः फलं स्वेनैवानुभोक्तव्यम्। धर्मदेवतया परिपाल्यमाने देशेऽस्मिन् स्वकृतस्य कर्मणो यावत्फलं तावदेव जीवा अनुभवन्ति; न ततः किञ्चिन्न्यूनं न वा ततः किञ्चिदधिकम्। आदित एवायमालस्यगुणः मयि स्थिरप्रतिष्ठोऽभवत्। तस्य फलमिदानीमनुभवामि। हेयतमं भौममैश्वर्यं गौरवमपि अलसो भूत्वा यः न प्राप्नोति स सद्गतिं नैव प्राप्नुयात्। यत्नेनोपार्जितस्य वस्तुनः सम्पूर्णानुभवानन्तरं परित्यागो हि श्रेयान्। महता यत्नेन धनोपार्जनपरं नरं कविर्न निन्दतिः, किंतु तत्र गौरवबुद्ध्या तद्भूमौ ये निखाय गोपायन्ति तानेव। प्राप्तमर्थं सन्मार्गेण व्ययीकरोति उत प्रकारान्तरेणेत्यत्र विषये नास्ति प्रकृते विवादः। सोऽन्यो विषयः। यत्नेन लब्धं धनं भुक्त्वा तद्गतदोषं जानन्नपि तन्निवृत्तये यत्नमकुर्वाण उपर्युपरि तदेव यो वृणुते तमेव महापापिनं वदति कविः।

सत्यम् । भौमवस्तून्यपि आलस्यगुणेन अलभमानो नरः न हि श्लाघार्हो भवति । सर्वदा उद्यमेन अण्डबहिरण्डानि प्रवर्तन्ते । नाशस्य तमोगुणः परमं कारणं भवति । तथा आलस्यमपि । यमभटाः दरिद्रदेवतायाः सुता एव ।

एवं कंचित्कालं चिन्तयित्वा, "मूढ भ्रमण, चित्तचाञ्चल्या ऽऽलस्यादीनामवकाशः न देयः । जीवितं सर्वमपि सत्यान्वेषणायैव विनियोक्तव्यम्" इति निरणैषम् । तदा मनः मामेवमब्रवीत् । "गन्धर्वलोके त्वयानुभूतं सुखमत्र किन्नु वर्तते ? । अहो तस्मिन् सुखे जुगुप्सा यदभवत् तत्सर्वथाऽयुक्तमितीदमिदानीमेव ज्ञायते । पुनरपि तत्र गच्छावः, एहि । गीतेन व्योम्ना प्रभया कुसुमेन स्त्रीभिश्च लब्धसुखेभ्योऽप्यधिकं सुखमनेन किरणावलम्बनरूपकर्मणा किं तव भविष्यति" इति । इदं श्रुतवानहं क्षणमात्रं चञ्चलतामयासिषम् । जन्मान्तरसुकृतबलेन अभूतपूर्वं मनोदार्ढ्यं ममा जायत ।

"हे मनः! जाने त्वामहम् । मदीयश्रेयसां त्वमेव विघातकम्, अश्रेयसां कारणभूतं चासि । अद्य त्वामहं हनिष्यामि पश्य" इत्युक्त्वा तस्य गलं हस्तेनागृह्णाम् । "का का" इति मनः विरौति स्म । पुनस्तदा नभसि अशरीरिणी वाक् इत्थं शुश्रुवे । "मनुज! वृथा यत्नं मा कार्षीः । त्वया मनो हन्तुं न शक्यते । त्वयि अतिमनस्कां दशां अवगाहमाने सति स्वयमेव तत् विलयं प्राप्स्यति । तादृशीं पक्वदशां न त्वं प्राप्तवानसि । तदवधि यत् किमपि कुर्वतस्ते मनो न नङ्क्ष्यति । अन्यच्च, इयं यात्रा केवलविहारार्थमेव त्वयाऽऽरब्धा । क्रीडार्थमागतस्य सत्यं नैव स्फुरेत् । गन्धर्वलोके सुखस्येव लोकेऽस्मिन् सत्यस्य दर्शनमपि सुकरं स्यादित्येतादृशमज्ञानं त्यज्यतां त्वया । त्वं महाभाग्यवानसि यतः अत्रागतेषु अन्येषु रथेषु पलायनं प्राप्तेषु

अयमेक एव ते रथः निराटङ्कं सञ्चरणशीलो दृश्यते । किं च भूर्भुवस्सुवर्महोजनस्तपोरूपान् षट् लोकानतीत्याऽऽगन्तार एव सत्यलोके स्थिरमवस्थातुं प्रभवन्ति । न त्वं साधारणो नरः, येन तवापि श्रमोऽयमनिवार्यो भवेत् । वरपुरुषो हि त्वम् । एकवारं धर्मलोकमेत्य तत्र स्थितान् विशेषान् ज्ञात्वात्र एहि । पश्चात् तत्त्वसम्बन्धी विचारस्ते सफली भविष्यति । धर्मलोके मनः सजीवं तिष्ठदपि त्वदाज्ञानुसारेण ते शुश्रूषां विधास्यति । अत्रागत्य पश्चात् अनुभवेनैव भावि सर्वं ज्ञास्यसि । गत्वा प्रत्यागच्छ" इति ।

नेत्रे बभ्रमतुः । कंचित्कालं स्मृतिर्नष्टा । ततः संज्ञामलभे । उन्मीलिताक्षोऽपश्यम् । भूलोके तिरुवल्लिक्केणिवीरराघवमुदलिवीथ्यां प्राङ्मुखं स्थितस्य गृहस्य सौधोपरिभागे यथावदवस्थितमात्मानं, सन्निकटे वार्तापत्रिकालेखिनीताम्बूलादिपरिकरांश्च अपश्यम् ।

# चतुर्थोऽध्यायः

## मर्त्यलोकः

शिरोबाधाऽधिका आसीत् । शयनादुत्थाय प्राच्यां दिशि द्वित्राः वीथीरतीत्य अज्ञातनामधेयायां यस्यां कस्यांचिद्वीथ्यां मदावासभूतं भाटकगृहं प्राप्तवानासम् । तद्गृहं किञ्चित् किं वर्णयामि! । गन्धर्वलोकमधिकृत्य श्रुतं किल भवद्भिः । मर्त्यलोके अस्माकं विद्यमानं सौकर्यं कीदृशमिति किञ्चित् भवन्तः शृण्वन्तु ।

मम गृहस्य पूर्वभागे एकमङ्गणम् । तत्परितः द्वित्राण्यपवरकाणि । प्रतीच्यभिमुखं गृहम् । अङ्गणस्य दक्षिणभाग एकं प्राङ्गणम् ।

एतत्सर्वं गृहस्य पूर्वभाग आसीत् । पश्चाद्भागे तु तथैव कानिचनाऽपवरकाणि । तत्राप्येकमङ्गणम् । तदुपर्येकः सौधः । तत्रापि द्वे अपवरके । उभयगृहभागस्थयोः सामान्योपयोगाय दक्षिणपार्श्वस्थे निष्कुटे एकः कूपः, जलप्रणालिका च वर्तेते । अहं, कनिष्ठमाता, भार्या, भार्यायाः स्वसुः पुत्री, अनुजः, मदपत्यं इत्येते गृहपश्चाद्भागे वासं अकुर्म । एको रायरार्यः गृहस्य पूर्वभागे बहुकुटुम्बी वसति स्म । पत्रालये वा यस्मिन् कस्मिंश्चित्कार्यालये वा स रायरार्यः भृतिकर्म कुर्वन्नासीत् । तस्य देहे यावत्यः गोपीचन्दनमुद्राः तावन्तः तस्य पुत्राः सन्ति । भार्या पुनरप्यन्तर्वत्नी । तस्मिन् प्राङ्गणे एका धेनुः । एवं तस्य बान्धवाः केचित् एभिः सह तात्कालिकतया वासं कुर्वन्ति ।

मदधिष्ठितभागे वातायनस्य कस्यचित् सत्त्वेन वायुप्रसरस्यास्त्येव कश्चिदवकाशः । रायरार्यकुटुम्बिनां तद्दुर्लभम् । रात्रौ मशकबाधा तु सोढुमशक्या । मम निद्रा नायात्येव । क्षयरोगपीडितस्य रायरार्यस्य कासध्वनिः सदा श्रूयेत । तस्य पुत्राः एकस्यानन्तरमपर इति क्रमेण रुद्युः । अन्तर्वत्नी तस्य भार्या अन्तरान्तरा प्रबुध्य पुत्रान् भगवन्तं भर्तारं अन्ततः यं कमपि कर्णाटकभाषायां निन्दित्वा पुनरपि शयीत ।

रायरार्यस्य गृहविषये एवं स्थिते मदीय गृहसम्भ्रमः इतोऽपि विचित्रतरः । अस्तु । प्रधानकथा मध्ये कुण्ठितासीत् । वीरराघवमुदलिवीथ्यां गृहमागतः किलाहम् । आगमनमार्गे अश्वशकटधूलिकोलाहलध्वनि दुर्वासनादीनतिक्रम्य, ततः गृहपूर्वभागे रायरार्यतद्भार्यापुत्रप्रभृतिभ्यो विपद्भ्यो विनिर्मुक्तः सन् पश्चाद्भागे स्थितं सौधंप्रत्यगच्छम् । तत्र पर्यङ्कपठनलेखनसुहृदालापादि नानाविषयेभ्यः उपयुज्यमानस्य तस्यापवरकस्य बहिःप्रदेशमागत्योपविशन् भार्या-

माह्वयम् । सा आगत्य 'किं?' इत्याह । 'शिरोवेदनां सोढुं न शक्नोमि । स्वल्पं मरिचचूर्णमानय' इत्यवोचम् । "तदस्तु । द्वयोर्दिनयोरेकवारं इयं कपटशिरोवेदना आगच्छति मम कार्यकल्पनाय । तत्सर्वमस्तु । अद्य मध्याह्ने क्षीरविक्रेत्री धनमावश्यकमित्यवोचत् । रायरार्यस्य पत्नी, गृहकभाटकाय भवान् स्मारयितव्य इति मह्यमवोचत् । मासेऽस्मिन् बालस्य वलयक्रयणाय धनं दास्यामि इत्यवोचद्भवान् । मां वञ्चयितुं भवान् सिद्धहस्तः किल" इति उपरि च "तत इदं" इति सहस्रं सा अवोचत् । तद्दिने सायं तयोच्यमानं ऋणं सर्वमप्येकदैवापनेयं चेत् अन्ततः लक्षत्रयरूप्यकमपेक्षितं स्यादिति मम अभात् ।

"वीथ्यां गच्छतामुदासीनानां कृते यथेष्टं वित्तं वितीर्यते । गृहव्ययार्थं धनमपेक्षितं चेत् मुखं विकृतं भवति । यदीयमेव दुरवस्था । नुवर्तेत तदा किं भवेत् ? न किमपि, सर्वनाश एव" इत्याशिषः प्रयुञ्जाना स्ववाङ्मुखमपूरयत् ।

"गता शिरोवेदना । दयां कृत्वा त्वमधो गच्छ" इति सप्रश्रयं तां न्यवेदयम् ।

"सुष्ठु । सदा परैःसह संभाषणेन वृथा कण्ठशोषणमपि भवतां सह्यवेदनमस्ति । मय्येकं वचनं ब्रुवत्यां सहसा क्रोधो जायते" इत्यवोचत् सा । मामाश्वासयतीति तस्या मनसि भावः । ततो बहुभ्यो दिनेभ्यः पश्चादेव धर्मलोकयात्रां कर्तुं मया निर्णयः कृत आसीत् । अत्रान्तरे प्रवृत्ताः केचन विशेषाः देशकालवर्णनादीनि च प्रकृते लिख्यन्ते । मर्त्यलोकः महान् विशालश्च । सर्वोऽपि मदीयोऽनुभवः लेखनी-यश्चेत् अष्टादशगुणं महाभारतमिव अतिमहान् कश्चित् ग्रन्थ एव रचनीयो भवेत् । अथापि द्वित्राण्येव दृश्यानि उदाहरणतया निर्दिश्यन्ते ।

20-तमे दिने बालानां ज्वरः, भार्यायाः श्रोत्रबाधा, मम पित्तमूलं शिरोभ्रमणम् ।

21-तमे दिने पाठशालायां भ्रातुः विद्याशुल्कायाऽन्तिमो दिवसः । कार्यालयाद्धनमानेतुं व्यस्मार्षम् । तेन स पाठशालां नैव जगाम । स्वदेशीयोद्यमेऽवतीर्णं मां राजकीयानुमत्या अनुसरन्तश्चारपुरुषाः मम भ्रातुर्निकटे, "तव भ्रातुः सुहृदं कश्चित् राजकीयाः दण्ड्यत्वेन ग्रहीष्यन्ति' इति यदवोचन् तां शुभवार्तां अनुजो मन्निकटमेत्य निवेदयति स्म ।

22-तमे दिने, भार्या-कनिष्ठमात्रोर्मध्ये कलहः । ते उभे अपि मामेत्य अन्योन्यं दोषारोपणमकुरुताम् । जीवितलक्ष्यभूते देशीयोद्यमे ममावतरणमनुचितमिति, तन्मूलतया कुटुम्बे महान् विषादो भविष्यतीति च कनिष्ठमाता मेऽसकृत् धर्मोपदेशं अकरोत् । नासिकायामसकृत् कण्डूतिर्जातेव, अदृश्यत । अयमेको दुष्टरोगः किं स्यादिति चिन्ताकुलोऽभवम् । नैश्चिन्त्यमाप्तुं कृतप्रयत्नेऽपि मयि पुनः पुनः चित्तं तदेव स्मारयदवर्तत ।

23-तमे दिने, ताम्बूले नागवल्यां अधिकसुधालेपनेन वक्त्रं व्रणमयमासीत् । तेन जलपानमपि दुष्करमभवत् । स्वभावतो बहुकार्यव्यापृतस्य तत एव अन्नं निगिलितुमप्यसमर्थस्य मे देहे दौर्बल्यं क्रोधश्चावर्धेताम्" इत्यादि ।

मयि प्रमादः स्यादपि । किन्तु गणनेयं न प्रमाद्यति । छी! छी! मर्त्यलोकोऽपि किं कश्चिल्लोकः? अत्र नरा नार्हन्ति ; किन्तु कूर्मवृकादयो जन्तव एव । लोकोऽयं दुःखानामाकरः । अगौर

वस्याऽऽवासभूतः नरकसमश्च । अत्र अलब्धवैराग्याणां नराणां मुखमपि न द्रष्टव्यम् । गृहकृत्यानि आन्तरङ्गिकांश्च कांश्चन विषयान् सदृष्टान्तं एतावता प्रादर्शयम् । अद्य बाह्याः मित्रसम्बन्धिनश्च केचन विषयाः सोपमानं प्रतिपादयिष्यन्ते । तिरुवल्लिक्केण्यां "चे......संघनाम्नी काचित् देशभक्तानां सभा वर्तते ; यस्यां देशभक्ताः परं नासन् । सभासमावेश एतावता नैवाचलत् । कैश्चित् अय्यंगारसुहृद्भिः सह समावेशं कारितवानहम् । अचिरादेव विलयं प्राप्तेयं सभा अमुमंशं स्पष्टयति यत् एतत्प्रवर्तका वयं न देशभक्ता इति ।

आलस्यस्याहं दासः । मम सुहृदः तिन्त्रिण्यन्नस्य दासानुदासाः केचित् धनकिङ्कराः; पादाणकदासदासाश्च ।

परन्तु, अस्मासु एकैकस्यापि बीरसंभाषणं श्रुतवतां करचरणं सद्यः कम्पेत । धनदासमहाशयः सर्वेभ्योऽपि भाषणेऽतीव समर्थः । 'धनुरिव नभः नामयेयं' इति कश्चिदीरयेत् । 'वालुकाभिः रज्जुं कुर्यामि' त्यपरो ब्रूयात् । एवमेव कार्ये कृते आङ्गलानां प्रभावः षण्मासेभ्यः प्रागेव विलयमेष्यति' इति अन्य ईरयेत् । "स्वराज्यलाभाय दशवर्षाणि पर्याप्तानीति श्यामजी कृष्णवर्मा मन्यते । षट्सु वर्षेष्वेव तत्प्राप्तुं शक्यमिति मे भाति" इत्येकः भणेत् । मण्डूकाकारः तृतीयः, "षण्मासा इति वद रे!" इति तदुक्तं वाक्यं किञ्चिद्विपरिणमय्य व्याख्यां कुर्यात् ।

धनदासमहोदयोऽस्मासु प्रथमं स्थानं वहति । स सर्वमेतत् श्रुत्वा कुतूहलभरितः स्यात् । किन्तु "श्वः सूर्योदयात्प्राक् स्वराज्यं सम्पाद्य ते दद्याम् । यदि त्वं किञ्चिद्धनं मे दद्याः" इति काचित् देवता आगत्य

यद्येनं पृच्छेत्, तदा धनदासः, "हे देवते! वन्दे त्वाम्। ओं शक्त्यै नमः। ओं परायै नमः। अम्बिके! त्वत्कृतस्यास्योपकारस्य का प्रत्युपकृतिमहं कुर्याम्। शरीरं वित्तं प्राणाश्चेति त्रितयमपि त्वदायत्तमेव। यत्त्वया धनं पृष्टं तत्र किञ्चित्सविनयं निवेदयामि श्रूयताम्। त्वया क्रियमाणमिदं कार्यं केवललोकोपकाराय। "तदर्थं सामान्यजनेभ्यः धनं सम्पाद्य दीयते चेत् समञ्जसं स्यात्। मयैकेनैवापेक्षितस्य वित्तस्य दानं न समञ्जसं भाति। आगामिनि सप्ताहे भाविन्यां सभायां विषयमेतं निश्चिनुमः। कृपया पुनरत्रागन्तव्यम्। गम्यतां पुनरागमनाय। वन्दे मातरम्" इति उत्तरमुक्त्वा तां देवतां प्रेषयेत्।

अहो! को वायं मर्त्यलोकः? सदा परप्रतारणं, परवञ्चना। अनिवार्यो विचारः। नात्र सारोऽस्ति, न वा सत्ता। अन्तः प्रविश्य कीटैर्भक्षणेन साररहितं कृतं जीवनम्। एकैकोपि अन्येषु दोषमारोपयति! स्वातन्त्र्ये सति 'सर्वमहं कर्तुं शक्नुयामि'ति दृढप्रत्ययेन वर्तते सर्वोऽपि। किन्तु ममैकस्य ऋजुप्रवर्तनेन किं भविष्यति। अन्ये न विश्वसनीयाः खलु" इति मन्यते सर्वोपि। अन्यानविश्वासपात्राणि वदन्नेव स्वयमन्यान् प्रतारयति। अहो मूढ! परवञ्चनयाऽन्योन्य-विश्वासः इतोऽप्यधिकं वर्धेत' इति किं मन्यसे?। मानवसमूह-स्यानिवार्योऽयं कश्चिद्रोगः संक्रान्तोऽस्ति। अयमनिवार्यः शापः। अप्रतिकार्यं विषम्। इदमेव धनमिति नाम्ना व्यपदिश्यते।

आशया प्रेरितो नरः पिशाचमेतं वन्दते। सा चाऽऽशा अरुचिसहिता, विवेकशून्या च। गन्धर्वाणां आशा परं रुचिसमेता। ज्ञानं सत्यलोकस्य साधनम्।

इत्थं नानादृश्यानि भूलोकादुद्धृत्य प्रदर्शनीयानीत्यमंसि । निरर्थकस्यास्याऽधिकं निरूपणेन नास्ति किंचित्प्रयोजनमिति मत्वा विरमामि ।

## पञ्चमोऽध्यायः

### धर्मलोकः

अतीतेषु कतिपयेषु दिवसेषु एकदा ज्ञानरथमारुह्य धर्मलोकमगाम् । गन्धर्वलोकमवाप्य रथादवरुह्य यथेष्टं यन्मया सञ्चरितं, तद्वत् अत्रापि कर्तुं शक्यमिति मन्वानो रथादवारुहम् । प्रसन्नं मुखं, आयते नेत्रे । कृष्णं कुटिलं च श्मश्रु । दक्षिणकर एको ग्रन्थः । एवम्भूतः कश्चित् युवा ममाग्रत आगत्य, "रथान्माऽऽवरुह । तिष्ठ तत्रैव । अहमपि रथमारोक्ष्यामि । त्वया सहाऽऽगत्य तव एतल्लोकविशेषाः प्रदर्शनीया इति धर्मदेवतया अहमाज्ञप्तोऽस्मि" इत्याह ।

तं पश्यतो मम तस्मिन् भीतिः गौरवं चाजायेताम् । केनाप्यनिर्वाच्येन कारणेन दृढोऽयं सङ्कल्पो मे समजनि यत् एतादृशः कश्चित्सुहृल्लभ्यते चेत् नानाविषयाणां परिपूर्णवैशद्यसम्पादनेन सह सद्गतिप्राप्तिरपि सुलभा भवेदिति । स युवाऽऽगत्य मम रथमारुरोह । आपादचूडं एकवारं पुनस्तमद्राक्षम् । अहो किमद्भुतं रूपम् । तस्य देहे एका वलिरपि नास्ति । एवं तद्देहगताः सर्वेऽप्यवयवाः सामुद्रिकालक्षणानुरोधेन गणितदेवतया कल्पिता इव प्राकाशन्त । यावद्देहं एकं तेजो ददृशे । तच्च न गन्धर्वेषु परिदृश्यमानं भ्रामकमेकं फालफल्यरूपम् । किन्तु स्वाभाविकमेव वर्चः । प्रकृत्यां स्वस्वकर्मनियतेषु लताकुसुमादिपदार्थेषु एकरूपं चेष्टितं दृश्यते किल । तथाविधमेवेदम् । साष्टाङ्गं तस्य पादयोः पतित्वा अवन्दे । "धर्मं चर" इति कथयन् स मामनुजग्राह ।

ततः, "पुत्रक! तप इति कृतनामधेयोऽहम् । देशमेनमागच्छतामहं मार्गदर्शी वर्ते। ये ये यान् यान् धर्मान् द्रष्टुमिच्छन्ति तेभ्यः तांस्तान् प्रदर्शयेयम् । आतिमिङ्गिलात् कीटपर्यन्तं विद्यमानस्यैकैकस्यापि जन्तोः नियताः केचन धर्माः सन्ति । तथैव सूर्यचन्द्रनक्षत्राण्यारभ्य अण्डपर्यन्तं सर्वस्यापि वस्तुनः असाधारणः कश्चित् धर्मो वर्तत एव । किं च देशकालानुसारेण एकत्रैव धर्माः भिद्यन्ते । सर्वमेतत् क्रमेण परीक्ष्य द्रष्टव्यं चेत् दशसहस्रवर्षाण्यपि न पर्याप्तानि भवेयुः । अतः यान् धर्मान् अवश्यज्ञातव्यत्वेन त्वमिच्छसि तानेव तां नीत्वा प्रदर्शयेयम् । तदा सामान्याकारेण बहुविषयान्तराण्यपि ते दृष्टिगोचरी भवेयुः" इति अवदत् स युवा । "मुनिवर! ब्राह्मणधर्मान् क्षत्रियधर्मांश्चाहं ज्ञातुमिच्छामि" इति तमब्रवम् ।

"युज्यते । एहि मया सार्धम् । आदौ धर्मदेवताया आलयमेत्य प्रणम्याऽऽगच्छाव" इत्याह स्म स मुनिः । उभावपि सद्यो गन्तुमुद्युक्तौ ।

मार्गमध्ये किं किमासीत् इतीदं ज्ञातुमपि यथा समयो न लभ्येत तथा नेत्रनिमीलनात्पूर्वमेव स्वच्छशीताभिः स्फटिकशिलाभिर्निर्मितं देवालयमेकमागतौ अभूव । पश्चाद्भागेनावरुह्य महामुनौ अग्रे गच्छति तं अहमन्वसरम् । क्रमेण आवां देवमन्दिरं प्राविशाव । "जयो धर्म राजाय", "जयो यमाय", "जयो वैवस्वताय" "जयः सूर्यतेजस्विने" "जयो महोग्राय" "जयो महाशान्ताय" इत्येवमादयः जयघोषा अश्रूयन्त । मनः संभ्रान्तमभवत् । हस्तपादं अकम्पत । सर्वं शरीरं स्वेदक्लिन्नं अभवत् । भीतभीतः सन्नहं,

"मुने! कुत्र मां नयसि?" इत्यपृच्छम्। "यमस्यान्तिकम्" इत्याह। "कुतः? प्रभो! कुतो वा?" इति भयार्दितोऽभवम्। मत्पार्श्वे परावृत्य मम शरीरं स्पृष्ट्वा, स्वीयं महान्तं कृपाकटाक्षं मयि प्रसारयन्, "मा भैषीः! धर्मे भीतिः कुतः?" इति मुनिः अवदत्। तदानीं दुर्भरा भीतिर्मेऽपगतेवासीत्। तदन्तरे मूर्छितोऽहं भूम्यां अपतम्। तदा कांश्चित् स्वप्नानपश्यम्।

हा! के वा इमे दुष्टस्वप्नाः। स्थूलस्थूलाः कीटाः मां भक्षयन्त इव दृश्यन्ते। बत! किं नाम पातकं कृतं मया, येनाहं नरके प[ति]तोऽस्मि। "नरके वह्निना दहेयुः। अवयवान् खण्डशः छित्वा चित्रवधं कुर्युः" इति हि जना अवोचन्। तत्सर्वमपि अहं सोढुं शक्नुयाम्। अशुद्धजन्तूनां वस्तूनां च मध्ये मां प्रक्षिप्य खल्विमे पीडयन्ति। अशुद्धविषयस्मरणस्य तल्लिप्सायाश्च किन्वियं शिक्षा?। "अय्यहो! तदानीं सर्वमेतन्न मे विदितमासीत्। अशुद्धचिन्ता-मग्नान् बन्धून् सुहृदोऽन्यांश्च पश्यन्नहं तत्सांगत्यदोषेण किल पापकर्माऽकार्षम्, नाहं जाने" इत्याक्रोशम्।

"तत्र, तत्र, तत्र पश्य! परिचितपूर्वाः अनेके मयानुभूयमानां वेदनां स्वयमप्यनुभवन्ति। मां दृष्ट्वा केचिल्लज्जन्ते। अतिमहतः शङ्खकीटस्य विषाणयोरधस्तात् मुखमावृत्य केचित्तिष्ठन्ति। मां पश्यन्तः केचित् रुदन्ति। अप्पप्प! स्थलशङ्ख कूर्मकर्कटकगृहगोधिकादयः ते स्थूलस्थूलाकाराः। एभ्योऽपि अशुद्धतराणां वस्तूनां मध्ये यन्मया व्यसनमनुभूतं तदत्र लेखितुमेव जिह्रेमि"। "हे मनुजाः! अशुद्धभावान् त्यजत। प्रीत्या कथयामि भवद्भ्यः। अशुद्धां चिन्तां माकार्ष्ट। अनयाऽवस्थयाऽलम्। हे ईश्वर! मामग्नौ प्रक्षिप, पुनः प्रक्षिप। इत उपरि पापकर्म न कुर्याम्" इत्युक्त्वा सगद्गदमरुदम्।

ततः स्थलान्तरे निक्षिप्तमात्मानमपश्यम् । मम कायोपरि सर्वत्र अनेके रोगा उदभवन् । कुष्ठरोगः गजपादः पक्षवातः क्षयो गुल्मः । किं बहुना? किमेको द्वौ वा? । देहाभिमानेन तद्रक्षणार्थं अधर्ममाचरन्तो हेमूढाः! युष्मान् प्रतिबोधयामि । अहो! कुतो नाशं प्राप्स्यथ ।

स्वल्पः कालोऽत्यक्रामत् । केचन पिशाचाः मां नीत्वाग्नौ प्राक्षिपन् । अग्निः किं करिष्यतीत्यादौ चिन्तितवता मयाऽग्निचिह्नस्य दर्शनमात्रेणैव पादताडनदन्तदशनहस्ताभिघातैः पिशाचेभ्य आत्मानं मोचयितुं यत्नोऽकारि ।

"अय्यहो! किं वा वलं तेषाम् । क्रमशः मामेकैकस्मिन्नप्यग्निकुण्डे पुनपुनः पातयित्वोद्धृतवन्तः । शरीरं हि तप्यते । अङ्गानि खलु पच्यन्ते । अय्यो! अजमांसमिव मम हस्तौ पादौ च खण्डशः छित्वा उपरिष्टात् लम्बयन्ते । मुण्डं वह्निशिलासु खलु क्षिपन्ति । मां रक्षितुं किं न कोऽप्यस्ति? कोपि नास्ति किम्? नास्ति किम्? । तपोमुने! त्वमपि किं मां न रक्षेः?" इति रुदन्नवर्ते । ततः संज्ञां प्राप्य, उन्मीलिताक्षोऽपश्यम् ।

स मुनिः जलेन मे मुखं प्रक्षाल्य अश्रुपूर्णकृपाकटाक्षः, "सुत! इतः परं त्वं सुखी भविष्यसि । प्रारब्धकर्माणि अननुभूय नाशयितुं न शक्यन्ते । स्वप्नानिमान् मा स्मर । गतस्य दुःखस्येदानीं स्मृत्वा चिन्तनमज्ञकृत्यम् । इत उपरि धर्मे मार्गे त्वां नेष्ये । 'जय धर्मराज!' इति ब्रूहि" इत्याह ।

अहमपि तथैवाऽवदम् ।

वक्रमार्गेण मां भ्रामयित्वाऽन्ते धर्मराजस्य सभां अनयत् स मुनिः । स्पटिकमयं स्थलं, स्फटिकमय्यो भित्तयः, स्फटिकमयाः स्तम्भाः । तत्रैकं स्वर्णसिंहासनम् । व्याघ्रसर्पाणां स्वर्णमय्यः प्रतिमाः आसनस्याधस्तात् विशीर्णा आसन् । सभामण्डपस्योपरि न किञ्चिद्वितानमवर्तिष्ट; किन्तु नभ एव वितानतां भेजे । चन्द्रकिरणाः साक्षात् धर्मराजस्य किरीटे पतन्तः तं रत्नकिरीटं जाज्वल्यमानं कुर्वन्ति । धर्मराजस्य सूर्यपुत्रत्वेन तं वा सभास्थानं वा किरणा न तेपिरे इति मे ज्ञातमासीत् । किमग्निरेवाग्निं दहेत्? । धर्मराजस्य मकुटोपरि अग्निमय एकः कृपाणः वियन्मध्ये विस्फूर्जत्स्फुलिङ्ग इव जाज्वल्यमानः अतिष्ठत् । अयं धर्मस्य रक्षां कुर्वन् विराजते । धर्मं हिंसितुं प्रवृत्तस्य शिरसि, धर्मात्प्रमाद्यतो धर्मस्य शिरसि च कृपाणोऽयं पतित्वा तौ विनाशयेत्'' इत्यहमज्ञासिषम् ।

धर्मराजस्य मुखं व्यलोकयम् । बालगङ्गाधर महाशयस्य मुखसाम्यं किंचित्तत्र ददृशे । तदपि साम्यं स्वल्पांश एव । किन्तु, मनुष्याणां मुखे दृश्यमानः कालप्रयुक्तो वर्णभेदः तस्य दिव्ये मुखे नावर्तत; यतः धर्मराजः स्वयं कालरूपः । स्वर्णसमाकारेण वज्रसारवता केनचिदपूर्वेण लोहेन वस्त्वेकं निर्माय तत्र महाशक्तिसम्पन्नाः प्राणाः संयोजिता इव तदा प्राकाशत तस्य वदनम् । एषामुपरिष्टात् दिव्यमेकं वर्चः । धर्मो दयाविहीन इतीदं बहुवारं मया चिन्तितमासीत् । 'सिंहासनमिवास्य चित्तमपि वज्रनिर्मितं किम्?' इति चिन्ता मे अजनि । तन्न सत्यम् । धर्मः पक्षपातरहितः । मूढविश्वासरहितश्च । दयाविवेकयोः समवायेन निर्मितो विग्रह एवायं धर्मशब्देन व्यपदिश्यते ।

स तपोमुनिः मां धर्मराजस्य पुरतो नीत्वा अवास्थापयत् । धर्मः प्रसन्नवदनो भूत्वा, "स्वागतं !" इत्युक्त्वा "ओमि"त्यन्वगृह्णात् ।

धर्मराजे भाषितुमुद्युक्ते पूर्वमेव तत्पादयोः पतित्वा साष्टाङ्गं प्रणम्य तत्पादाङ्गुलीः अश्रुसिक्ताः कुर्वन्नहमुत्थायाऽतिष्ठम् ।

"तव पापानि सर्वाणि विनष्टानि । विषादं त्यक्त्वा पूर्णताप्रापके मार्गे गन्तुमर्हतां प्राप्तवानसि । इतः परं इन्द्रियार्थेषु ते मनः न प्रवर्तेत । नीचेषु पदार्थेषु प्रीतिं न करिष्यसि । न त्वं गर्वस्य वशमेष्यसि । अपि तु मन एव त्वद्वशे भूत्वा त्वदुक्तं सर्वं करिष्यति । यत्त्वं कांक्षसि तत्सर्वं मुनिरयं ते दर्शयिष्यति । शुभं ते भूयात्" इति धर्मराजो मामुवाच । पुनस्तमभिवाद्य, तत आज्ञामलभे ।

स महर्षिः घोरं विपिनं प्रति मां निनाय । तत्र माकिं विंशत्या तार्णगृहैः सहित एको ग्रामः । एकैकस्यापि गृहस्य समन्तादेक आरामः । तत्र गृहाणि निबिडानि सन्निहितानि वा नावर्तन्त । प्रतिगृहद्वयं मध्ये शून्यप्रदेशः प्रायेणाऽदृश्यत । लावण्यशुचित्व सौलभ्यादीनां त्रयाणां गुणानामेकैकमपि गृहं आदर्शभूतमराजत । अन्विष्यान्विष्य पश्यतोऽपि मे तत्र अशुद्धमेकं दृश्यं दुर्गन्धो वा नालक्ष्यत । पावनतम एकस्मिन् गृहेऽहं मुनिश्च अविशाव । विपुलावंसौ, ज्ञानप्रभाशोभि वदनं, आयते नेत्रे, दीर्घधवलं श्मश्रु । एवंविधः कश्चित् विप्रस्तत्राऽवर्तत ।

तस्य पुरतः पञ्चषाः छात्राः पुस्तकपाणयः पठन्त आसन् प्राप्तयोः आवयोः यथावदुपचारं कृत्वा आसने उपावेश्य छात्रान् दृष्ट्वा, "शिष्याः! अद्याधीतेनालम् ; गम्यताम्" इत्याह स विप्रः ।

"प्रवर्ततामध्यापनम्। विघ्नकारिणावावामागताविति न मन्तव्यमि" त्यहमब्रवम्। "तेन न कापि हानिः। अध्यापनस्य समापनकालः स्वयमेवागतः। युवामपि समये आगतौ स्थः। युवयोरागमनेन नास्ति कश्चिद्विरोधोऽध्यापनस्य। लोकेऽस्मिन् तैस्तैः क्रियमाणं धर्मकार्यं न केनापि विघटयितुं शक्यम्" इति स विप्रो जगाद।

"भोः कण्वाचार्याः! एतावता इमे किं वाऽपठन्" इति स मुनिरुपाध्यायं पप्रच्छ।

"गणितशास्त्रमधीयते एतैः?" इति समादधे कण्वः।

मुनिः—यदाहं पूर्वमागतः तदा शिल्पशास्त्रं किल भवन्तोऽध्यापयन्त आसन्।

कण्वः—तथैव। ते तु कार्मिकाः। अद्यतनास्तु ब्राह्मण क्षत्रियजात्योरन्तर्गताः।

"सकलशास्त्र रत्नाकरः" इति मनस्येवाकथयम्।

तत् श्रुतवान् स कण्वः, "नास्ति तथा किञ्चित्। वेदान्तधर्मशास्त्रे विना, गणितं शिल्पं इति द्वयोरेव मे वैदुष्यम्। प्रार्थयतां छात्राणां यथामति तदुपदिशामि। स एव मे परमो धर्मः" इत्यूचे।

तदनन्तरं कण्वाचार्याय मां हस्तेन निर्दिश्य मुनिरयं, "अस्मै ब्राह्मणधर्मोपदेशाय एनमत्रानीतवानस्मि" इत्याह।

कण्वः समन्दहासं, "अहह! सर्वधर्माणामाश्रयभूता भवन्त एव यन्मामुत्तमं मत्वेहागतवन्तस्तन्महदद्भुतमेव। अथापि भवदाज्ञानुसारेण तस्मै सर्वमुपदेष्टुं सज्जोऽस्मि" इत्यवदत्।

आदित एव ममोत्पन्नमुत्साहं एतावत्पर्यन्तं कथञ्चित् बहिरप्रकाशयन्नेवासम् । अद्य तद्वचनं श्रुत्वा न्यायाधिकरणे साक्षिण इव किन्तु भक्तिश्रद्धाविनयसम्पन्नः—सकौतुकं तस्मै प्रश्नवर्षाण्यवर्षम् । सोऽपि विना श्रमेण निःसन्देहं च बहूनर्थान् मह्यमुपादिशत् ।

केचन प्रश्ना उत्तराणि चात्र निर्दिश्यन्ते ।

प्रश्नः—"प्रभो! नरस्य ब्राह्मण्यं किं जन्मनैव जायते उत विद्यया?" ।

उत्तरम् :—"जननकाले सर्वे नराः मृगप्राया वर्तन्ते । ततः विद्यागुणकर्मभिः त एव भिन्नभिन्नजातिष्वन्तर्भावमर्हन्ति" ।

"चातुर्वर्ण्यं मया सृष्टं गुणकर्मविभागशः" इति भगवतोक्तम् ।

प्रश्नः—स्वामिन्! इयं व्यवस्था अपि नामानुभवे वर्तते? ।

उत्तरम् :—सत्यम् । मम पिता क्षत्रियः । अहं तु ब्राह्मणः । मत्पुत्रेषु द्वादशसु एकं परं ब्राह्मणकर्मणि नियोजितवानस्मि । अन्ये तु तत्तद्गुणयोग्यतानुरोधेन यथायोगं ब्राह्मणक्षत्रियवैश्यादि-त्रैवर्णिककर्माध्ययनाय न्ययुज्यन्त ।

प्रश्नः—"मर्त्यलोके, तत्रापि भारतदेश एव वर्णाश्रमधर्मेषु भेदा दृश्यन्ते । तदपि भवदुक्तक्रमेण न प्रवर्तते किल?" ।

उत्तरम् :—"भारतदेशे परं वर्णाश्रमभेदसद्भावकथनमसङ्गतम् । सर्वेष्वपि देशेष्वस्त्येवायं विभेदः । प्रत्युत, भारतदेश एव भेदव्यवस्थेयं विनाशं प्राप । पुरा देशेऽस्मिन् नियमोऽयं मदुक्तक्रमेणैवासीत् । पुराणेतिहासवेदोपनिषदादयो ग्रन्था एव अत्र विषये साक्षिभूताः अमुमर्थं दृढीकुर्वन्ति । अद्य भारतादन्यत्र विदेशेष्वपि

भगवदुक्तप्रकारेणैव सर्वं प्रवर्तते। क्रमोऽयमत्र भ्रष्टो बभूव। अत एवाऽत्रत्याः दारिद्र्यदासत्वव्याधिषु पतिताः खिद्यन्ते।"

प्रश्नः—"ब्राह्मणधर्मान् मह्यमुपदेष्टुमर्हन्ति भवन्तः"।

उत्तरम्:—"संग्रहेण ब्रवीमि। ब्राह्मणकुलीनाः कस्यचिज्जनसंघस्य ज्ञानधनरक्षकाः विद्यासस्यकृषीवलभूताश्च विराजन्ते। इमे यथाशक्ति सर्वाणि शास्त्राण्यधीत्य तत्तद्योग्यतानुसारेण वर्णान्तरीयेभ्यः तान्युपदेष्टुमर्हन्ति। उपदेशकाले स्वस्य आहाराय यावदपेक्षितं न ततोऽप्यधिकं तैर्ग्रहीतुं शक्यते। 'यस्य गृहे परदिनाहाराय अपेक्षितं धान्यं पूर्वमेव सज्जीकृत्य स्थाप्यते न स ब्राह्मणो भवति' इति याज्ञवल्क्यमहर्षिः वदति"।

जनैरनुभूयमानस्य दुःखस्य यतोऽज्ञानमेव कारणं, यतश्च तस्मादज्ञानात् जनरक्षणं ब्राह्मणानामवश्यकर्तव्यमापतति, तेन विप्रा एव सर्वस्याप्यग्र्यं स्थानमर्हन्ति। जनेषु शूद्रधर्माणां विनाशकाले विप्रैः शूद्रधर्मप्रचारणपरै भूत्वा लोके तात्त्विकशूद्राणामभिवृद्धये यतितव्यम्। वैश्यधर्मे क्षीणदशां प्राप्ते विप्रैः वैश्यग्रन्थाध्ययनाध्यापनादिकमेव स्वकर्तव्यं मन्यमानैः तात्विकवैश्यजनानामभिवृद्धये यत्न उपादेयः। ब्राह्मणक्षत्रियधर्माणां विनाशस्य न कथञ्चिदपि अवसरः परिकल्पनीयः। अन्यथा जनसमूहः सर्वोऽपि विलयमाप्नुयात्।

कदाचित् सम्भवति च घोरविपत्काले, 'स्वीयधर्माणामनुष्ठानमेवालम्, किमन्यधर्मस्वीकारेण' इति मत्वा तूष्णींभावो न युज्यते कस्यापि। भवने वह्निना दह्यमाने, पित्रा कार्यालयं प्रति, पुत्रेण पाठशालायै, स्त्रीभिरुद्यानाय, मात्रा देवालयं प्रति, शाकाहरणार्थं सेवकेन आपणं प्रति, जलानयनार्थं च पाचकेन गमनं किन्तु युक्तम्?।

तदानीमेकीभूय, अग्निं शमयितुं यत्नो हि सर्वैः कर्तव्यः । कार्यालयं प्रति पश्चात् गन्तुं शक्यम् । देवालयं पाठशालां वा चोरो नादाय गच्छति । परेद्युः गन्तुं शक्यम् । क्रीडार्थं पुष्पानयनं नेदानीं प्रधानं कर्म; न वा शाकानयनं; नापि पाककर्म । गृहलग्नस्याग्नेः निवारणयत्न एव प्रकृते प्रधानभूतः । तदर्थमेव सर्वैः प्रयतितव्यम् । कलियुगे वर्णविभेदः अतात्त्विकः, केवलपरप्रतारणार्थं परिकल्पितश्च । अत्रेदानीं कलिः प्रवर्तते । किन्तु द्वित्रेभ्यः सन्ततिभ्योऽनन्तरं कलिर्नङ्क्ष्यति, कृतयुगं उत्पत्स्यते च । तदा तत्र वास्तविकवर्णाश्रमधर्मभेदाः आविर्भूय स्थास्यन्ति । इदानीन्तनाः कपटभेदाः विलयमेष्यन्ति ।

"वस्तुतः ब्रह्मज्ञानसम्पन्न एव ब्राह्मणपदवाच्यो भवितुमर्हति । विषयोऽयं वज्रसूचिकाख्योपनिषदि सविशदं अवाचि । अथापि व्यवहारे जनानां विद्याप्रदातार एव ब्राह्मणा इति परिगण्यन्ते । सङ्ग्रहेण वक्तव्यं चेत् सकलग्रन्थाध्ययनाध्यापनं, लोके सकलविधकर्मणां प्रवर्तनं, लौकिकविभवेष्वनासक्तिरित्यादय एव ब्राह्मणानां प्रधानधर्माः" इत्युदीरयति स्म स कण्वः ।

सम्भाषणानन्तरं झटित्युत्थाय बहिर्जगाम कण्वः । पुनः अस्मत्सविधमेत्य, सन्ध्यावन्दनकालोऽतीत इत्युवाच सः । वयं त्रयोऽपि उत्थाय ग्रामाद्बहिः नातिदूरवर्तिनः चूतवनस्यान्तिके स्थितं नदीतीरमागच्छाम । तदा प्रतीच्यां दिशि रविबिम्बो व्योम्नि अर्धनिमग्न आसीत् । प्रकृतिदेव्यतिरमणीया बभौ । तौ मुनी उभावपि निर्वर्तितनित्यकर्मानुष्ठानौ दूरे दूरे उपविशन्तौ च ब्रह्मज्ञानमग्नावभूताम् । "ओमि" त्युक्त्वा जपन्नहं शान्तिदेवतामयाचे ।

जपतपसी परिसमाप्य पुनरपि कण्वमहर्षेराश्रममागताः स्मः। अहं तपोमुनिश्च ततोऽनुमतिमभीप्सन्तौ तथा अभ्यार्थयाव । "अद्य रात्रिवेला । इमां रात्रिं अस्मिन् कुटीर एवोषित्वा ततो युवां गच्छतम्" इति समादधे स कण्वः।

"परदिने प्रातराहारार्थं गृहे धान्यं सम्भृत्य स्थापयतो ब्राह्मण्यं न सेत्स्यति" इत्युक्तं वचनं सद्यो मे स्मृतिपथमारुरोह । तेनायमतीवाकिञ्चनः स्यादिति मनसि कृत्वा, 'मास्तु, आवां गच्छाव" इत्यवदम् ।

कण्वमुनिर्मदाशयमजानात् । "भ्रातः! यत्र धर्मो न तत्रास्ति दारिद्र्यम् । तत्कृते मास्तु ते चिन्ता । कृपयाद्य रात्रौ अत्रोषित्वैव गन्तव्यं त्वया" इत्यवदत् ।

लज्जा मे महत्यजायत । अवाङ्मुखोऽभवम् । तौ मुनी उभावपि मन्दस्मितमकुरुताम् । ततस्तां रात्रिं तत्रैव स्थातुं निर्णयमकुर्व ।

कण्वाश्रमे कटे उपविष्टस्य मे नैश्चिन्त्यं तादृश मजनिष्ट यत् पूर्वं गन्धर्वलोके सुगन्धभवनसौधोपरि हंसतूलिका पर्यङ्के पर्वतकुमार्या सह स्थितस्यापि नोदपादि । कण्वाचार्यस्तपोमुनिश्च तत्त्वविचारं कर्तुमारभेताम् । विवादावसरे प्रत्नतूनान् अनेकान् विषयान् स मुनिः प्रकटयति स्म । तदा कण्वभार्यापि तत्रोपविशन्ती तत्सर्वं शुश्राव ।

तस्याः दर्शनावसरे वेदप्रतिपाद्य मैत्रेयी प्रभृति नारीमणीनां रम्यं चित्रं मनोदृष्टिगोचरमासीत् । पातिव्रत्य नैर्मल्यविनयज्ञानादयो गुणाः सर्वे तां देवीं प्राप्य विहारं चक्रुः। देव्याः विनयगुणेन महर्षीणां विवादगुणेन चाभिवृद्धं तत्तेजः पश्यतां बहुरमणीयम लक्ष्यत । किञ्चित्कालानन्तरं कण्वकुमारः मातुरन्तिकमेत्यो-

प्राविशत् । अतिसुन्दरं कुमारमेनं मुनिवेषसहितं द्रष्टुं मम मनो न सेहे । राजकुमारवेषेण अमृतेक्षणाभिः नारीमणिभिः संलपन्, वीरवराधिष्ठिते रणाङ्गणे सेनाधिपतिवेषेण विलसंश्च किलायं द्रष्टव्यः । तदा ग्रहगणैरुपेत्य अग्रे आगच्छन् बालसूर्य इवायं विराजेत । अस्य वा इदं चीरवसनम् ? अस्य वा केवलधान्यकन्दमूलादिक आहारः? । अस्य वा कूपजलपानम् ? । अस्य वाऽनवरतग्रन्थविचारः। शुष्कशास्त्रविचारो वा ? । स्वीयेषु द्वादशसु पुत्रेषु यदेनं तपः कर्मणि नियोजितवानयं मुनिः, तत्सर्वथानुचितमिति मे भातमासीत् । एवं चिन्तयति मयि महर्षीणां वेदान्तविचारोऽपि समाप्तिमगात् । मम मनोभावं दृष्टिभिः साक्षात्कुर्वन्निव स मुनिः, "सर्वराजलक्षणसम्पन्नं कुमारमेनं ब्राह्मणधर्मे नियोज्य, अन्येषां पुत्राणां परं बहिः प्रेषणस्य कारणं ज्ञातुमिच्छामि" इति कण्वं पप्रच्छ ।

"पुत्रक! अद्य ज्योतिषे ('तच्च नभोवर्तिग्रहनक्षत्रमानपरं गणितशास्त्ररूपम्। न तु अदृश्यतां प्राप्तस्य महिषस्यान्वेषणोपायबोधकसामान्यग्रन्थरूपम्') । दर्शनाभ्यासस्य समीचीनोऽयं खलु दिवसः । त्वमेकाकी गत्वा नक्षत्रस्थानानि सुस्पष्टं ज्ञात्वा एह्यत्र" । इति उक्त्वा स्वपुत्रं प्रेषयामास स कण्वः ।

पुत्रं प्रशस्य यत्किञ्चिद्वक्तुमवकाशे प्राप्ते, तदपि तस्य श्रवणपदं प्रविशदिव कथयितुं न वाञ्छति मुनिः । कुमारो बहिर्जगाम । तत एवं वक्तुमारभत मुनिः ।

"अधर्मविनाशादपि अज्ञानविनाशाय अधिकमेव वीर्यमपेक्षितं भवति । शरीरसम्बद्धेभ्यो रोगेभ्यः जनरक्षणं शूद्रवैश्ययोः स्वाभाविको धर्म इष्यते । क्षत्रियो धर्मं पालयति । ब्राह्मणो ज्ञानं रक्षति । तत्कृते

विप्राणां असंख्याकं वीर्यं तेजश्चापेक्ष्यते; तथा धैर्यपराक्रमावपि । अज्ञानस्य सैन्यान्यनन्तानि । अज्ञानरूपं स्रोतः शुष्कं भूत्वापि न विनाशमापद्यते । अज्ञानवृक्षस्य मूलं आदिशेषस्य शिरःपर्यन्तमभिव्याप्य तिष्ठति । अज्ञानसैन्यविजय-अज्ञानस्रोतोविशोषण-अज्ञानविषवृक्ष-समूलोन्मूलनादिकं न तावत् सुखं साधयितुं शक्यते ।

"महाभारतयुद्धे पार्थादपि कृष्णस्यैव कार्यभारोऽधिकः । यावत् कृष्णस्य वेदव्यासमहर्षेरपि तावत् कार्यगौरवम्" । एवं नानाविषयान् संभाष्य अल्पाहारं च स्वीकृत्य ततो निद्रातुं गताः स्मः । परेद्युः उषस्युत्थाय नित्यकर्माणि परिसमाप्य, सत्यरामनाम्नः क्षत्रियवीरस्य गेहमहं मुनिवरश्चागच्छाव । तपोमुनेरागमनं श्रुतवान् स सत्यरामः प्रत्युद्गमनादिनोपचर्य, मण्डपमेकंप्रति नीत्वा, आवामासने उपवेशयन् स्वयमप्युपाविशत् । क्रमेण मम कथां वक्तुमारभत स मुनिः ।

सत्यरामः सभुजःकम्पं उच्चैः हसन्, "अहमेक आज्ञापालकः । सुस्पष्टं सचातुर्यं च विषयमेकमुपदेष्टुं नाहमस्मि समर्थः । किञ्च धर्मराजस्य सभापतिषु मत्तोऽपि क्षत्रियगुणसम्पन्नाः बहवो बिराजन्ते । विहाय तानिमान् धर्मदृष्टान्ततया यन्मां भवन्तो विजानन्ति तन्नूनं महाभाग्यमित्येवाहं मन्ये । अथापि अनर्होऽहमेतस्य इत्येषा मतिर्मे-च्चित्तान्नापसरति" इत्युदीरयति स्म ।

ततो मां दृष्ट्वा "कृतानां प्रश्नानां यथाशक्ति उत्तरमुक्त्वा सन्देह निवर्तनाय सज्जोऽहमस्मि" इत्यभणत् सत्यरामः ।

"क्षत्रियधर्मेष्वादिमः धर्मान्तरणामाधारभूतश्च धर्मः कः? । तन्मे सुविशदं वक्तव्यम्" इत्यहमभणम् ।

पुरत उपविष्टस्य तस्य वीरसिंहस्य वदने तेजो ज्वलति स्म। नेत्रे ज्ञानरूपं किमपि वस्तु वमन्तीवादृश्येताम् । यावदेहं मम नूतमेकं चलनं विकासं च जाते इव अद्राक्षम्।

परवशो भूत्वा अनुभवावस्थायां वर्तमानः गुरोर्वचनं शृण्वन् शिष्य इव सकौतुकमहमश्रौषम्।

"मित्र! क्षत्रियधर्मेषु बहुषु प्रधानभूतं तदीयोद्यमानां प्रवर्तकं स्रोतश्च किमिति त्वमपृच्छः । तदेव कथयामि, शृणु"। युद्धमेव क्षत्रियाणां परमो धर्मः। तदेव तेषां निश्वसितम्। तदेव तेषां प्राणाः। युद्धाद्विरतः क्षत्रियः तस्मिन् क्षण एव क्लीबो भवति। स अवाच्यो भूत्वा सर्वेषां निन्दास्पदं च भवति । मित्र! तव वेदान्ताध्यापनायाहमशक्तोऽस्मि। अधर्म आदौ कथं जातः? इतीदं तत्त्वं मुनितुल्येभ्यो ज्ञानिभ्यः सकाशात् पृष्ट्वा जानीहि। परन्तु विषयमेकमेवाहं जाने। अधर्मः कदा किमर्थमस्माकं पुरतः तिष्ठति?। तव हस्तेन हतः सन् मरणं प्राप्तुम् । स किं ब्रूते?। "तात! तव हस्तगतं कुठारं मच्छिरसि निपात्य शिरः द्वेधा छिन्धि" इति वक्ति।

"अधर्माः रक्तबीजवन्तः। ते सम्यक् हताः सन्तोऽपि पुनः पुनः उत्पन्ना एव भवन्ति । यावज्जीवं अधर्मं छित्वा तस्य पातनमित्येतदेव क्षत्रियस्य प्रधानो धर्मो भवति । अहरहः सूर्यः परिभ्रमन् अन्धकारं विद्राव्य नाशयन् वर्तते । सूर्य एव प्रथमः क्षत्रियः। अस्मत्कुलपितामहश्च।

"अधर्मविनाशाय सदा युद्धकरणमेव क्षत्रियाणां धर्मः" इत्यवोचम् । तत्कार्योपयुक्ताभ्याससाधनानां परिग्रहोऽवश्यकर्तव्य इति कथनमत्युक्तिरेव स्यात्"। इति स्वप्रसङ्गं परिसमापयामास।

स्थैर्यं प्राप्तस्याधर्मस्य असकृत हननेन किंवा फलं भविष्यतीति मत्वा मुग्धोऽभवम् । एवं पृष्टः सत्यरामः अविलम्बितं सद्य एवं समादधे ।

तमोगुणेन कृतः प्रश्नः । "मित्र! नरः क्षणार्धमपि कर्माकुर्वन्नैव वर्तेत । तत्त्वाभिमतमस्तु मावा । अनवरतं त्वया कर्म कुर्वता भाव्य-मित्येष नियमः । तस्य च कर्मणः जलधितरङ्गलग्नतृणवत् करणापेक्षया सूर्यवत् करणं गौरवाय किल? । सामान्यशरीरसुखसम्बन्धिषु कार्येष्वपि नैवं चिन्तयति नरः । सदा मलिनीभावस्वभावं शरीरं कुतो वा जलेन नित्यं प्रक्षालनीयम् ? । वारं वारं प्रक्षालितमपि तत् अशुद्धमेव भवतीत्यालोच्य, कोवा स्नानमकुर्वन् वर्तते? । क्षणिक-नश्वरदेहस्य कृते क्रियमाण उपचारः नित्यधर्माय किं न क्रियते जनैः ? ।

"किञ्च, अधर्मो धर्मस्य भोज्यपदार्थः । ततः लोके यावत्पर्यन्तं धर्मस्य सद्भावः तावत् सहैव अधर्मसद्भावोऽप्यनिवार्य एव । न्याय्यं चेदम् । अधर्मे सर्वात्मना नष्टे स्वस्याहारालाभेन धर्मः स्वयमेव नाशं प्राप्नोति" इत्याह ।

धर्मलोके चिरकालं वस्तुं न मया पुण्यं व्यधायि । क्षत्रियवीरगृहात् बहिर्गमनानन्तरं स तपोमुनिःबहुभ्यः स्थलेभ्यो मामनयत् । भुक्तमन्नमजीर्णं भूत्वा बहुकालानन्तरमुदरबाधामिव मदीयपुण्ये-नाप्यनाश्यमेकं कर्म यतः कुतश्चिदाविर्भूय मच्चित्ते काञ्चित् धर्मविरुद्धामिच्छामुत्पादयामास । मुनिना तेन तत्रस्थानां धर्मविशेषाणां प्रदर्शनावसरे साचेच्छा मनसि वर्धितुमारेभे ।

कतिपयदिवसानन्तरं मामेकान्ते परित्यज्य तपोमुनिः कार्यान्तर-व्यापृतः अगमत् । प्रारब्धकर्मणः फलम् ! । मय्येकान्ते तिष्ठति नीचं मनः पर्वतकुमार्याः चित्रं पुरत आनाय्य स्थापयामास । 'हा!' स कालः कियानद्भुततम आसीदित्यहममंसि । अग्रे स्थितो मोहनविग्रहः पुनरन्तिकमाययौ । तामालिङ्गितुमुदतिष्ठम् । सा मम हस्तयोः मध्यमागत्य तस्थौ । ओष्ठाभ्यां ओष्ठौ संयोज्य क्षणमात्रं मोहपरवशः अभवम् । द्वित्राणां पृथिवीनां निर्भिद्यपतनेनेव "फटीर" इति शब्दः कश्चित् शुश्रुवे । 'का' इति कथयन् मूर्छितोऽभवम् ।

अक्षिणी निमील्य पश्यति मयि, तिरुवल्लिक्केण्यां पुरातनगृहे मां परितः व्यजनेन वीजयन्तः केचनाऽलक्ष्यन्त । "किं कुरुथ?" इति मया पृष्टास्ते, "भूताविष्ट इव त्वमबिभेः" । अत्रागत्य दृष्टः श्वासविहीनस्त्वमासीः । नानाविधशैत्योपचारानन्तरं अद्य सजीवोऽसि" इत्यब्रुवन् ।

"अहो ! प्राणपरित्यागोऽपि न तावत् महत्कर्म । धर्मः किल मया परित्यक्तः" इत्युक्त्वा अश्रूणि अमुञ्चम् ।

समाप्तम्

— शुभं भूयात् —

———

## BOOKS BY THE SAME AUTHOR

| | | |
|---|---|---|
| 1. | Sri Krishna Leela—in Tamil | Rs. 1-5 |
| 2. | Ezhu Nataka Kathaigal (Short stories of Seven Sanskrit Dramas) | „ 1-2 |
| 3. | Tiruppavai in Sanskrit | „ 0-30 |
| 4. | Tirukkural in Sanskrit (Arattupal) | „ 1-50 |
| 5. | Krishna Katha Sangraha (Skt. Poetry) | „ 0-75 |
| 6. | Vemanapadyamulu (in Sanskrit Slokas) | „ 1-75 |
| 7. | Vemanapadyangal (in Tamil) | „ 1-2 |
| 8. | Vemanapadyamulu (in Sanskrit Slokas with Tamil Translation) | „ 3-00 |
| 9. | Kambaramayanam (in Sanskrit) | in prin |

*Copies can be had of* :

**S. N. SRIRAMA DESIKAN,**
(Author)
25, Burkit Road, T. Nagar, Madras-17.